वस्तुतस्तु "पूर्वरङ्गस्य रङ्गद्वाराभिधानमङ्गम्" इत्युच्यते (ड)। यदुक्तम्।

"यस्मादभिनयो ह्यत्र प्राथम्यादवतार्य्यते।
रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकमिति" ॥ (ढ)

उक्तप्रकारायाश्च (ण) नान्द्या रङ्गद्वारात् प्रथमं नटैरेव कर्त्तव्यतया न महर्षिणा निर्देशः कृतः। कालिदासादिमहाकविप्रबन्धेषु च।

"वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः" ॥ (त)

---

(ड) केचित्तु रत्नावल्यादौ श्लोकचतुष्टयरूपाया नान्द्या दर्शनात् अत्र प्रथम-पदस्यापि श्लोकचतुर्थभागपरत्वं व्याचक्षुः तन्न। इदं गुरुभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे। विन्देम देवतां वाचममृतामात्मनः कलामित्युत्तररामचरितनाटके चाष्टपदायाः नान्दीत्वानुपपत्तेरिति विभिन्नमालोच्योक्तम् एतदिति पूर्वरङ्गस्य सामान्यमङ्गलाचरणरूपस्य रङ्गद्वारम् अभिधानं यस्य तादृशम्। अङ्गं विशेषः।

(ढ) यस्मादिति। यस्मात् यतः प्राथम्यात् अत्र अभिनयः नाट्यव्यापारः अवतार्य्यते प्रारभ्यते इत्यर्थः अतः वाक् च अङ्गञ्च तयोरभिनयात्मकं क्रियमाणं मङ्गलं रङ्गद्वारं ज्ञेयम्।

(ण) उक्तप्रकारायाः कथितरूपायाः आशीर्वचनसंयुक्तेत्याद्युक्तायाः।

(त) वेदान्तेष्विति। वेदान्तेषु उपनिषत्सु रोदसी द्यावापृथिव्यौ व्याप्य स्थितं यम् एकम् अद्वितीयं पुरुषम् आहुः कथयन्ति बुधा इति शेषः, यस्मिन् ईश्वर इति अनन्यविषयः तन्मात्रप्रतिपादकः शब्दः यथार्थानि अन्वर्थानि अक्षराणि यस्य तादृशः यौगार्थविशिष्ट इत्यर्थः, यश्च नियमिताः संयमिताः प्राणादयः शरीरस्थपञ्चवायवः यैः तादृशैः मुमुक्षुभिः मोक्षेच्छुभिः योगिभिः इत्यर्थः अन्तः अन्तःकरणमध्ये मृग्यते अन्विष्यते, स्थिरा निश्चला या भक्तिः तत्साध्येन योगेन सुलभः सुदृढभक्तिमात्रलभ्य इत्यर्थः, सः स्थाणुः शिवः वः युष्माक-

एवमादिषु नान्दीलक्षणायोगात्। उक्तञ्च "रङ्गद्वारमारभ्य कविः कुर्य्यादिति"। अतएव प्राक्तनपुस्तकेषु "नान्द्यन्ते सूत्रधारः" इत्यनन्तरमेव "वेदान्तेष्वित्यादि" श्लोकलिखनं दृश्यते। यच्च पश्चात् "नान्द्यन्ते सूत्रधारः" इति लिखनं तस्यायमभिप्रायः "नान्द्यन्ते सूत्रधार इदं प्रयोजितवान् इतः प्रभृति मया नाटकमुपादीयत इति कवेरभिप्रायः सूचित इति"।

पूर्वरङ्गं विधायैव सूत्रधारो निवर्त्तते।
प्रविश्य स्थापकस्तद्वत् काव्यमास्थापयेत्ततः॥
दिव्यमर्त्ये स तद्रूपो मिश्रमन्यतरस्तयोः।
सूचयेद्वस्तु वीजं वा मुखं पात्रमथापि वा २८३ [थ]

काव्यस्यार्थस्य स्थापनात् स्थापकः। तद्वदिति सूत्रधारसदृशगुणाकारः। इदानीं पूर्वरङ्गस्य सम्यक्प्रयोगाभावादेक एव सूत्रधारः सर्वं प्रयोजयतीति व्यवहारः। स स्थापको दिव्यं वस्तु दिव्यो भूत्वा मर्त्यं मर्त्यो भूत्वा मिश्रञ्च दिव्यमर्त्ययोरन्यतरो भूत्वा सूचयेत्। वस्त्वितिवृत्तं यथा उदात्तराघवे।

"रामो मूर्ध्नि निधाय काननमगान्मालामिवाज्ञां गुरो-
स्तद्भक्त्या भरतेन राज्यमखिलं मात्रा सहैवोज्झितम्।

---

निःश्रेयसाय मङ्गलाय वा कैवल्याय अस्तु निःश्रेयसदायी भवतु इत्यर्थः। शार्दूलविक्रीडितं वृत्तम्।

(थ) पूर्वरङ्गमिति। सूत्रधारः पूर्वरङ्गं विधाय कृत्वैव निवर्त्तते। ततः स्थापकः तदाख्यः द्वितीयो नटः प्रविश्य रङ्गमिति शेषः आस्थापयेत् प्रकटयेत्। अन्यत् स्पष्टम्।

(द) वस्तु यथा राम इति। रामः मालामिव गुरोः पितुः आज्ञां मूर्ध्नि शिरसि निधाय गृहीत्वा काननम् अगात्। भरतेन तद्भक्त्या तस्मिन्

तौ सुग्रीवविभीषणावनुगतौ नीतौ परां सम्पदं
प्रोज्झिता दशकन्धरप्रभृतयो ध्वस्ताः समस्ता द्विषः" ॥ (ट)

बीजं यथा रत्नावल्याम्।

"द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात्।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः" ॥ (ध)

अत्र हि समुद्रे वहित्रभङ्गमग्नोत्थिताया रत्नावल्या अनुकूलदैवलालितो वत्सराजगृहप्रवेशो यौगन्धरायणव्यापारमारभ्य रत्नावलीप्राप्तौ बीजम्। मुखं श्लेषादिना (न) प्रस्तुतवृत्तान्तप्रतिपादको वाग्विशेषः। यथा।

"आसादितप्रकटनिर्मलचन्द्रहासः
प्राप्तः शरत्समय एष विशुद्धकान्तः।
उत्खाय गाढ़तमसं घनकालमुग्रं
रामो दशास्यमिव सम्भृतबन्धुजीवः" ॥ (प)

---

रामे वा भक्तिः अनुरागविशेषस्तया माता जनन्या सहैव अखिलं समग्रं राज्यम् उज्झितं त्यक्तम्। तौ प्रसिद्धौ अनुगतौ आश्रितौ सुग्रीवविभीषणौ परां सम्पदं राज्यरूपमित्यर्थः नीतौ प्रापितौ वालिदशाननवधात् रामेणेति शेषः। प्रोज्झिताः अतिगर्विताः दशकन्धरप्रभृतयः समस्ताः द्विषः शत्रवः ध्वस्ताः विनष्टाः। शार्दूलविक्रीड़ितं वृत्तम्। अत्र समस्तं रामायणवृत्तं प्राधान्येन सूचितम्।

(ध) द्वीपादिति। अभिमुखीभूतोऽनुकूलतां प्राप्तो विधिः अन्यस्मात् निजाधारभिन्नात् द्वीपात् सर्वतो जलवेष्टितभूभागादपि जलनिधेः समुद्रस्य मध्यादपि दिशः अन्तादपि अभिमतम् अभिलषितं वस्तु आनीय झटिति घटयति सङ्गमयति।

(न) वहित्रम् अर्णवयानम्। अनुकूलदैवलालितः अनुकूलदैवबलात् सञ्जातः। श्लेषादिना प्रस्तावानेकार्थकत्वादिना।

(प) आसादितेति। शरद्वर्णनमिदम्। आसादितः प्राप्तः प्रकटः परिस्फुटः निर्मलस्य चन्द्रस्य हासः विकाशो येन तादृशः अन्यत्र आसादितः

पात्रं यथा शाकुन्तले।

"तवास्मि गीतिरागेण हारिणा प्रसभं हृतः।

एष राजेव दुष्मन्तः सारङ्गेणातिरंहसा"॥ (फ)

रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः।

रूपकस्य कवेराख्यां

गोत्राद्यपि स कीर्त्तयेत्।

ऋतुञ्च कञ्चित् प्रायेण

भारतीं वृत्तिमाश्रितः॥ २८४॥

स स्थापकः। प्रायेणेति क्वचिद्दतोरकीर्त्तनमपि। यथा रत्नावल्याम्। भारतीवृत्तिस्तु।

भारती संस्कृतप्रायो

वाग्व्यापारो नराश्रयः॥ २८५॥

---

प्राप्तः रावणवधादिति भावः प्रकटः समुज्ज्वलः निर्मलः शाणित इत्यर्थः चन्द्रहासः तदाख्यः रावणस्य असिविशेषः येन तादृशः, विशुद्धा समुज्ज्वला कान्तिः नक्षत्रादीनाम् अन्यत्र स्वस्य इति भावः यस्य तथोक्तः, तथा सम्भृतानि सम्यक् पोषितानि विकासितानि इत्यर्थः बन्धुजीवानि तदाख्यपुष्पाणि येन सः अन्यत्र सम्भृताः संरक्षिताः बन्धूनां विभीषणसुग्रीवादीनां जीवाः प्राणाः राक्षसेभ्यः इति भावः येन तथाभूतः, एषः शरत्समयः दशास्यमिव रावणमिव उग्रं भीषणं गाढ़तमसं निविड़ान्धकारम् अन्यत्र तमोगुणाच्छन्नं घनकालं मेघसमयं वर्षाकालमित्यर्थः अन्यत्र अतिकृष्णवर्णम् उत्खाय उन्मूल्य राम इव प्राप्तः उपस्थितः। अत्र श्लेषेण रामायणरूपप्रस्तुतवृत्तान्तः सूचितः।

(फ) तवेति। हारिणा मनोहरेण तव गीतिरागेण सङ्गीतरागेण अतिरंहसा अतिवेगेन सारङ्गेण एषः राजा दुष्मन्त इव हृतः आकृष्टः अस्मि। अत्र दुष्मन्तनेपथ्यधारिणः पात्रस्य प्रवेशः सूचितः।

संस्कृतबहुलो वाक्प्रधानो व्यापारो भारती।

तस्याः [ ब ] प्ररोचना वीथी
तथा प्रहसनामुखे।
अङ्गान्यत्रोन्मुखीकारः
प्रशंसातः प्ररोचना ॥ २८६ ॥

प्रस्तुताभिनयेषु प्रशंसातः श्रोतॄणां प्रवृत्त्युन्मुखीकरणं प्ररोचना। यथा रत्नावल्याम्।

"श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोके हारि च वत्सराजचरितं नाट्ये च दक्षा वयम्।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किं पुन-
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः" ॥ (भ)

वीथीप्रहसने वक्ष्येते।

नटी विदूषको वापि पारिपार्श्विक एव वा।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥

---

( ब ) तस्या इति। तस्याः भारत्याः वृत्तेः।

( भ ) श्रीहर्ष इति। श्रीहर्षः निपुणः सुदक्षः कविः काव्यरचयिता, एषा परिषत् सभापि गुणग्राहिणी गुणग्रहणे तत्परा न तु दोषग्रहणे इत्यर्थः, वत्सराजस्य चरितं लोके जगति हारि मनोहरञ्च, वयञ्च नाट्ये अभिनयव्यापारे दक्षाः निपुणाश्च, इह अस्मिन् जगति एकैकमपि वस्तु कवित्वादिकं वाञ्छितफलस्य इष्टसिद्धेः पदं स्थानं, किं पुनः समस्तमिति भावः, मम भाग्यस्य शुभादृष्टस्य उपचयात् वृद्धेः हेतोः अयं सर्वः गुणानां कवित्वनाट्यदक्षत्वादिरूपाणां गणः समूहः समुदितः सम्यक् उदयं प्राप्तः। अत्र कविप्रभृतीनां प्रशंसया श्रोतृणामुन्मुखीकरणरूपा प्ररोचना।

( म ) आमुखमाह नटीति। नटी विदूषकः वापि अथवा पारिपार्श्विकः

चित्रैर्वाक्यैः स्वकार्य्योत्थैः
प्रस्तुताक्षेपिभिर्मिथः।
आमुखं तत्तु विज्ञेयं
नाम्ना प्रस्तावनापि सा ॥ २८७ ॥ [ म ]

सूत्रधारसदृशत्वात् स्थापकोऽपि सूत्रधार उच्यते। तस्य अनुचरः पारिपार्श्विकः। तस्मात् किञ्चिदूनो नटः।

उद्घात्यकः कथोद्घातः
प्रयोगातिशयस्तथा।
प्रवर्त्तकावलगिते
पञ्च प्रस्तावनाभिदाः ॥ २८८ ॥ [ य ]

पदानि त्वगतार्थानि
तदर्थगतये नराः।
योजयन्ति पदैरन्यैः
स उद्घात्यक उच्यते ॥ २८९ ॥ [ र ]

---

पार्श्ववर्त्ती नटविशेषः एते सूत्रधारेण सहिताः यत्र चित्रैः मनोज्ञैः स्वकार्य्यात् स्वकर्त्तव्यव्यापारात् उत्थैः उद्भूतैः प्रस्तुताक्षेपिभिः प्रकृतवस्तुसूचकैः वाक्यैः मिथः अन्योन्यं संलापं कुर्वते तत् तु आमुखं विज्ञेयं, सा नाम्ना प्रस्तावनापि विज्ञेयेति शेषः।

( य ) प्रस्तावनाभेदानाह उद्घात्यक इति। स्पष्टम्।

( र ) उद्घात्यकमाह पदानीति। अगतार्थानि अबोधितार्थानि पदानि तदर्थगतये तस्य अबोधितार्थस्य गतये बोधाय नराः अन्यैः पदैः यत् योजयन्ति स उद्घात्यक उच्यते।

यथा मुद्राराक्षसे सूत्रधारः ।

"क्रूरग्रहः स केतुश्चन्द्रं सम्पूर्णमण्डलमिदानीम् ।

अभिभवितुमिच्छति बलात् इति" । अनन्तरं नेपथ्ये "आः क एष मयि जीवति सति चन्द्रगुप्तमभिभवितुमिच्छतीति" ।

अत्र अन्यार्थवन्त्यपि पदानि हृदिस्थार्थागत्या अर्थान्तरे सङ्क्रमय्य पात्रप्रवेशः ( ल ) ।

सूत्रधारस्य वाक्यं वा
समादायार्थमस्य वा ।
भवेत् पात्रप्रवेशश्चेत्
कथोद्घातः स उच्यते ॥ २९० ॥

वाक्यं यथा रत्नावल्याम् । "द्वीपादन्यस्मादपि" इत्यादि सूत्रधारेण पठिते । एवमेतत् कः सन्देहः । "द्वीपादन्यस्मादपि" इत्यादि पठित्वा यौगन्धरायणस्य प्रवेशः । वाक्यार्थं यथा वेण्याम् ।

---

( ल ) क्रूरग्रह इति । क्रूरः अनिष्टफलदत्वेन निठुरः ग्रहः स केतुः राहुरित्यर्थः यद्यपि दैत्यविशेषस्य शिरोभागः राहुः अपरो भागः केतुरुच्यते तथापि चन्द्रग्रासे शिरोभागस्यावश्यकत्वात् केतुशब्दोऽत्र राहुपरो बोध्यः । अन्यत् स्पष्टम् । अथ अन्यार्थवन्ति यथा क्रूरः ग्रहः राक्षसो यस्य तदीयः सुहृत् मलयकेतुना सह वर्त्तमानः राक्षस इत्यर्थः सम्पूर्णमण्डलं सर्वोत्कृष्टराजमण्डलमित्यर्थः चन्द्रं चन्द्रगुप्तम् । इत्यादीनि अभिप्रेतार्थप्रतिपादकान्यपि पदानि हृदिस्थस्य अभिमतस्य अर्थस्य द्वितीयार्थरूपस्य गत्या अवगत्या द्वितीयार्थस्य प्रतिपादनं नासीदिति बुद्ध्या इत्यर्थः अर्थान्तरे द्वितीयार्थे सङ्क्रमय्य तत्सम्बन्धात् सङ्क्रमय्य अभिधाय इत्यर्थः पात्रस्य नटस्य चाणक्यवेषभृतः प्रवेश इति शेषः ।

"निर्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः" ॥ (व)

इति सूत्रधारेण पठितस्य वाक्यस्यार्थं गृहीत्वा नेपथ्ये आः दुरात्मन्! वृथा मङ्गलपाठक! कथं स्वस्था भवन्तु मयि जीवति धार्त्तराष्ट्राः? ततः सूत्रधारो निष्क्रान्तः। भीमसेनस्य प्रवेशः ।

**यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते ।**
**तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा २८१ [श]**

यथा कुन्दमालायाम् । "नेपथ्ये इत इतोऽवतरत्वार्य्या। सूत्रः। कोऽयं खलु आर्य्याह्वानेन सहायकं मे सम्पादयति। विलोक्य। कष्टमतिकरुणं वर्त्तते" ।

---

(व) निर्वाणेति। पाण्डुतनयाः पाण्डवाः माधवेन कृष्णेन सह अरीणां शत्रूणां प्रशमात् सन्धिकरणे शत्रुभावापगमात् अन्यत्र युद्धे निधनात् निर्वाणः शमितः वैरं विद्वेष एव दहनः अग्निः येषां तथाभूताः सन्तः नन्दन्तु आनन्दमनुभवन्तु। सभृत्याः सानुजीविनः कुरुराजसुताः धृतराष्ट्रपुत्राः दुर्य्योधनादयः, रक्ता अनुरक्ता प्रसाधिता अलङ्कृता भूः पृथिवी यैः तादृशाः अन्यत्र रक्तेन स्वगात्ररुधिरेण प्रसाधिता अलङ्कृता भूः यैः तथाभूताः तथा क्षतः विनष्टः विग्रहः कलहः सन्धिकरणादिति भावः येषां तादृशाः अन्यत्र क्षताः विनष्टाः विग्रहाः शरीराणि येषां युद्धप्रहारादिति भावः तथाभूताः सन्तः स्वस्थाः सुखिनः अन्यत्र स्वर्गस्थाः भवन्तु ।

(श) प्रयोगातिशयमाह यदीति। यदि एकस्मिन् प्रयोगे अन्यः प्रयोगः प्रयुज्यते तेन द्वितीयेन प्रयोगेण पात्रस्य नटस्य प्रवेशः चेत् भवति तदा प्रयोगातिशयो भवति ।

"लङ्केश्वरस्य भवने सुचिरं स्थितेति
रामेण लोकपरिवादभयाकुलेन।
निर्वासितां जनपदादपि गर्भगुर्वीं
सीतां वनाय परिकर्षति लक्ष्मणोऽयम्" ॥

अत्र नृत्यप्रयोगार्थं स्वभार्य्याह्वानमिच्छता सूत्रधारेण "सीतां वनाय परिकर्षति लक्ष्मणोऽयम्" इति सीतालक्ष्मणयोः प्रवेशं सूचयित्वा निष्क्रान्तेन स्वप्रयोगमतिशयान एव प्रयोगः प्रयोजितः (प)।

कालं प्रवृत्तमाश्रित्य
सूत्रधृग् यत्र वर्णयेत्।
तदाश्रयश्च पात्रस्य
प्रवेशस्तत् प्रवर्त्तकम् ॥ २८२ ॥ [ स ]

यथा "आसादितेत्यादि"। ततः प्रविशति यथानिर्दिष्टो रामः।

---

(प) लङ्केश्वरस्येति। लङ्केश्वरस्य रावणस्य भवने सुचिरं दीर्घकालं दशमासानित्यर्थः स्थिता सीतेति शेषः इति इत्थं लोकानां परिवादः दोषारोपणं तस्मात् भयं तेन आकुलः कातरस्तेन रामेण जनपदात् देशात् निर्वासितां ताड़िताां गर्भेण गुर्वीं भारवतीं गुरुगर्भभराक्रान्तामित्यर्थः सीतां लक्ष्मणः वनाय वनं नेतुमित्यर्थः परिकर्षति आकर्षति। वसन्ततिलकं वृत्तम्। अत्र नृत्यप्रयोगे सीतालक्ष्मणयोः प्रवेशसूचनरूपः प्रयोगः स्वप्रयोगं नृत्यरूपम् अतिशयानः अतिक्रम्य प्रयोजित इत्यर्थः।

(स) कालमिति। यत्र प्रवृत्तम् उपस्थितं कालम् आश्रित्य सूत्रधृक् सूत्रधारः वर्णयेत् तत्र चेत् यदि तदाश्रयः तदाश्रितः पात्रस्य नटस्य प्रवेशः भवति तत् प्रवर्त्तकम्।

यत्रैकत्र समावेशात्
कार्य्यमन्यत् प्रसाध्यते ।
प्रयोगे खलु तज्ज्ञेयं
नाम्नाऽवलगितं बुधैः ॥ २९३ ॥ [ ङ ]

यथा शाकुन्तले सूत्री नटीं प्रति "तवास्मि गीतिरागेणेत्यादि"। ततो राज्ञः प्रवेशः ।

योज्यान्यत्र यथालाभं
वीथ्यङ्गानीतराण्यपि ॥ २९४ ॥ [च]

अत्र आमुखे । उद्घात्यकावलगितयोरितराणि वीथ्यङ्गानि वक्ष्यमाणानि । नखकुट्टस्तु ।

नेपथ्योक्तं श्रुतं तत्र त्वाकाशवचनं तथा ।
समाश्रित्यापि कर्त्तव्यमामुखं नाटकादिषु ॥
एषामामुखभेदानामेकं कञ्चित् प्रयोजयेत् ।
तेनार्थमथ पात्रं वा समाक्षिप्यैव सूत्रधृक् ॥
प्रस्तावनान्ते निर्गच्छेत्
ततो वस्तु प्रयोजयेत् ॥ २९५ ॥ [ क ]

---

( ङ ) यत्रेति । यत्र प्रयोगे एकत्र विषये समावेशात् सादृश्योद्भावनात् अन्यत् कार्य्यं पात्रप्रवेशरूपं प्रसाध्यते सूच्यते तत् नाम्ना बुधैः पण्डितैः अवलगितम् उच्यते ।

( च ) योज्यानीति । अत्र आमुखे यथालाभं यथासम्भवम् इतराणि अन्यानि योज्यानि प्रयोक्तव्यानि । अन्यत् स्पष्टम् ।

( क ) नेपथ्योक्तमिति । तत्र नाटकादिषु श्रुतं नेपथ्योक्तं नेपथ्यभाषितं तादृ

वस्त्वितिवृत्तम्।

इदं पुनर्वस्तु बुधैर्द्विविधं परिकल्प्यते।
आधिकारिकमेकं स्यात् प्रासङ्गिकमथापरम्॥

अधिकारः फले स्वाम्यम्
अधिकारी च तत्प्रभुः।
तस्येतिवृत्तं कविभिः
आधिकारिकमुच्यते॥ २९६॥ [ख]

फले प्रधानफले। यथा बालरामायणे रामचरितम्।

अस्योपकरणार्थन्तु प्रासङ्गिकमितीष्यते॥२९७॥ [ग]

अस्याधिकारिकेतिवृत्तस्य उपकरणनिमित्तं यच्चरितं तत् प्रासङ्गिकम्। यथा सुग्रीवादिचरितम्।

पताकास्थानकं योज्यं
सुविचार्य्येह वस्तुनि॥ २९८॥ [घ]

---

च्छाकाममभाषितं समाश्रित्यापि आमुखं प्रस्तावना कर्त्तव्यम्। एषाम् आमुख-भेदानां अन्योक्तानां नखकुट्टकानां वा एकं कश्चित् प्रयोजयेत् विदध्यात्। एव-मुक् सूत्रधारः तेन अर्थम् अथवा पात्रं समाक्षिप्य प्रस्तावनान्ते निर्गच्छेत् रङ्गादिति शेषः ततः अनन्तरं वस्तु इतिहासं प्रयोजयेत् उपस्थापयेत्।

(ख) इदमिति। इदं वस्तु बुधैः द्विविधं परिकल्प्यते विभज्यते, एकं वस्तु आधिकारिकम् अपरं प्रासङ्गिकं स्यात्। फले कार्य्यस्य प्रधानफले स्वाम्यं स्वामित्वम् अधिकारः, तस्य स्वाम्यस्य प्रभुश्च अधिकारी। तस्य अधिकारिणः इतिवृत्तं कविभिः विद्वद्भिः आधिकारिकम् उच्यते।

(ग) अस्येति। अस्य आधिकारिकेतिवृत्तस्य उपकरणार्थम् उपकारार्थं वस्तु प्रासङ्गिकम् इति इष्यते।

इह नाट्ये ।

यत्रार्थे चिन्तितेऽन्यस्मिन्
तल्लिङ्गोऽन्यः प्रयुज्यते ।
आगन्तुकेन भावेन
पताकास्थानकन्तु तत् ॥ २९९ ॥ [ ङ ]

तद्भेदानाह ।

सहसैवार्थसम्पत्तिर्गुणवत्युपचारतः ।
पताकास्थानकमिदं प्रथमं परिकीर्त्तितम् ३०० [च]

यथा रत्नावल्यां "वासवदत्तेयम्" इति राजा यदा तत्कण्ठपाशं मोचयति तदा तदुक्त्या "सागरिकेयम्" इति प्रत्यभिज्ञाय "कथं प्रिया मे सागरिका अलमलमतिमात्रम्" इत्यादि फलरूपार्थसम्पत्तिः पूर्वापेक्षया उपचारातिशयात् (छ) गुणवती उत्कृष्टा ।

---

( घ ) पताकेति । इह वस्तुनि नाट्यरूपे इतिवृत्ते सुविचार्य्य सम्यक् विविच्य पताकास्थानकं योज्यं प्रयोक्तव्यम् ।

( ङ ) यत्रेति । यत्र अन्यस्मिन् अर्थे चिन्तिते तल्लिङ्गः तस्य अर्थस्य लक्षणान्वितः अन्यः अर्थः आगन्तुकेन अतर्कितेन भावेन रूपेण प्रयुज्यते चेदित्यध्याहार्य्यं तत् पताकास्थानकम् ।

( च ) सहसेति । उपचारतः अतर्कितभावोपनतत्वात् सहसा गुणवती परमप्रीतिकरी अर्थसम्पत्तिः फललाभः प्रथमम् आद्यं पताकास्थानं परिकीर्त्तितम् ।

( छ ) फलरूपार्थसम्पत्तिः फलरूपस्य अर्थस्य सागरिकारूपस्य सम्पत्तिर्लाभः । पूर्वापेक्षया वासवदत्तालाभापेक्षया इत्यर्थः उपचारातिशयात् अतर्कितोपनतत्वातिशयात् ।

वचः सातिशयश्लिष्टं
नानाबन्धसमाश्रयम्।
पताकास्थानकमिदं
द्वितीयं परिकीर्त्तितम्॥ ३०१॥ [ ज ]

यथा वेण्यां सूत्रः।

"रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः"॥

अत्र रक्तादीनां रुधिरशरीरार्थहेतुकश्लेषवशेन बीजार्थप्रतिपादनात् नेतृमङ्गलप्रतिपत्तौ सत्यां द्वितीयं पताकास्थानम् (झ)।

अर्थोपक्षेपकं [ ञ ] यत्तु
लीनं सविनयं भवेत्।
श्लिष्टप्रत्युत्तरोपेतं
तृतीयमिदमुच्यते॥ ३०२॥

---

( ज ) वच इति। सातिशयम् अतिमात्रं यथा तथा श्लिष्टं नानाबन्धे नानाविधो यो बन्धः रचना तत्समाश्रयं वचः वचनं द्वितीयम् इदं पताकास्थानकं परिकीर्त्तितम्।

( झ ) अत्रेति। बीजार्थप्रतिपादनात् भीमसेनक्रोधोपचितो युधिष्ठिरोत्साहः सन्दर्भस्य बीजं तस्य अर्थः प्रयोजनं फलं शत्रुनिपातनरूपं तस्य प्रतिपादनात् सूचनात् नेतुः नायकस्य युधिष्ठिरस्य मङ्गलप्रतिपत्तौ मङ्गलानुष्ठाने। प्रतिनायकस्य दुर्य्योधनस्य मङ्गले विजिते चानेनुष्ठेन भाविन नेतृमङ्गलप्रतिपत्तिरिति पताकास्थानकं बोध्यम्।

( ञ ) अर्थोपक्षेपकमिति। अर्थस्य कार्य्यस्य प्रस्तावस्य उपक्षेपकम् उत्थापकं सूचकमित्यर्थः।

लीनमव्यक्तार्थं श्लिष्टेन सम्बन्धयोग्येनाभिप्रायान्तरप्रयुक्तेन प्रत्युत्तरेणोपेतं सविनयं विशेषनिश्चयप्राप्त्या सहितं सम्पद्यते यत् तत् तृतीयं पताकास्थानम्। यथा वेण्यां द्वितीयेऽङ्के।

"कञ्चुकी। देव! भग्नं भग्नम्। राजा। केन? कञ्चु। भीमेन। राजा। कस्य? कञ्चु। भवतः। राजा। आः! किं प्रलपसि? कञ्चु। सभयं देव! ननु ब्रवीमि भग्नं भीमेन भवतः। राजा। धिक्! वृद्धापसद! कोऽयमद्य ते व्यामोहः (ट)। कञ्चु। देव! न व्यामोहः सत्यमेव।

भग्नं भीमेन भवतो मरुता रथकेतनम्।
पातितं किङ्किणीजालबद्धाक्रन्दमिव क्षितौ"॥ (ठ)

अत्र दुर्य्योधनोरुभङ्गरूपप्रस्तुतसंक्रान्तमर्थोपक्षेपणम्।

**द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः।**
**प्रधानार्थान्तरापेक्षी पताकास्थानकं परम्॥३०३॥ [ड]**

यथा रत्नावल्याम्।

"उद्दामोत्कलिकां विपाण्डुररुचिं प्रारब्धजृम्भां क्षणा-

---

(ट) वृद्धापसद! वृद्धेषु अपसदः अधमः तत्सम्बुद्धौ। व्यामोहः पीड़ा रोग इति यावत्।

(ठ) भग्नमिति। भीमेन भयानकेन मरुता वायुना भग्नं, खण्डितं भवतः तव रथकेतनं रथध्वजः किङ्किणी क्षुद्रघण्टिका तेषां जालं समूहः तेन बद्धः कृतः आक्रन्दः रोदनध्वनिर्येन तथाभूतमिव क्षितौ पातितम्। यथा कोऽपि शत्रुणा आहतः क्षितौ पतन् रोदिति तद्वदिति भावः।

(ड) द्व्यर्थ इति। द्व्यर्थः अर्थद्वयसहितः सुश्लिष्टः सुसम्बद्धः काव्येषु योजितः प्रयोजितः काव्यप्रयोगार्हं इत्यर्थः सर्वत्रैव काव्ययोजितस्य विद्यमानत्वेन काव्ययोजितत्वविशेषणस्य निरर्थकत्वापत्तेरिति भावः प्रधानं यत् अर्थान्तरम् अर्थविशेषः तत् अपेक्षते इति तदपेक्षी तत्सूचक इत्यर्थः परं चतुर्थं पताकास्थानकम्।

दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युतिमुखं देव्याः करिष्याम्यहम्" ॥

अत्र भाव्यर्थः सूचितः (ढ)। एतानि चत्वारि पताकास्थानकानि क्वचिन्मङ्गलार्थं क्वचिदमङ्गलार्थमपि सर्वसन्धिषु भवन्ति। काव्यकर्त्तुरिच्छावशाद् भूयोऽपि भवन्ति। यत् पुनः केनचिदुक्तं" मुखसन्धिमारभ्य सन्धिचतुष्टये क्रमेण भवन्तीति"। तदन्ये न मन्यन्ते। एषामत्यन्तमुपादेयानामनियमेन (ण) सर्वत्रापि सर्वेषामपि भवितुं युक्तत्वात्।

यत् स्यादनुचितं वस्तु नायकस्य रसस्य वा।
विरुद्धं तत् परित्याज्यमन्यथा वा प्रकल्पयेत्
॥ ३०४ ॥ [ त ]

---

(ढ) उद्दामेति। अहम् उद्दामम् उत्कटं यथा तथा उद्गताः कलिकाः कोरकाः यस्यास्ताम् अन्यत्र उद्दामा उत्कटा उत्कलिका कान्तार्थमुत्कण्ठा यस्यास्तां, विपाण्डुरा कुसुमविकाशात् विशेषेण पाण्डुवर्णा रुचिः कान्तिः यस्यास्तथाभूताम् अन्यत्र विरहेण पाण्डुकान्तिं, प्रारब्धजृम्भां विकाशोन्मुखाम् अन्यत्र जृम्भा आलस्यभङ्गः प्रारब्धा जृम्भा यया तादृशीं कामाभिलाषव्यञ्जकमिदम्, अविरलैः घनैः श्वसनोद्गमैः वात्याप्रसरैः अन्यत्र निःश्वासमरुद्भिः आत्मनः स्वस्य आयासं क्लान्तिम् आतन्वतीं प्रकटयन्तीम् इमामुद्यानलताम् उपवनवल्लीं समदनां कामात्ताम् अन्याम् अपरां नारीमिव अद्य पश्यन् अवलोकयन् देव्याः वासवदत्तायाः मुखं ध्रुवं निश्चितं कोपेन विपाटला विशेषरक्ता द्युतिः यस्य तादृशं करिष्यामि, साध्वी स्त्री भर्तारम् अपरां प्रत्यवलोकयन्तं दृष्ट्वा कुप्यतीति भावः। शार्दूलविक्रीडितं वृत्तम्। अत्र भाव्यर्थः। राज्ञा [illegible] दृष्ट्वा वासवदत्ता कोपं करिष्यतीति [illegible] सूचितम्।

(ण) भूयोऽपि पुनः पुनरपि भवन्ति प्रयुज्यन्तीति शेषः। एषामत्यन्त[illegible]मुपादेयानामिदमेषां अनियमेन नियमं विनैव।

अनुचितमितिवृत्तं यथा रामस्य छद्मना वालिवधः। तच्च उदात्तराघवे नोक्तमेव। सुग्रीववीरचरिते तु वाली रामवधार्थमागतो रामेण हत इत्यन्यथा कृतः।

अङ्केष्वदर्शनीया या वक्तव्यैव च सम्मता।
या च स्यात् वर्षपर्य्यन्तं कथा दिनद्वयादिजा॥
अन्या च विस्तरा सूच्या सार्थोपक्षेपकैर्बुधैः
॥ ३०५ ॥ [थ]

अङ्केषु अदर्शनीया कथा युद्धादिकथा।

वर्षादूर्द्ध्वन्तु यद्वस्तु
तत् स्याद्वर्षादधोभवम्॥ ३०६ ॥ [द]

उक्तं हि मुनिना।

"अङ्कच्छेदे कार्य्यं मासकृतं वर्षसञ्चितं वापि।
तत् सर्वं कर्त्तव्यं वर्षादूर्द्ध्वं न तु कदाचित्"॥ (ध)

---

(त) यदिति। यत् वस्तु नायकस्य वा रसस्य अनुचितं वा विरुद्धं स्यात् तत् परित्याज्यं वा अन्यथा प्रकल्पयेत् रचयेत्।

(थ) अङ्केष्विति। या कथा अङ्केषु अदर्शनीया निषेधनीया वक्तुमिति शेषः। सा तु सम्मता चेत् वक्तव्या कथया निर्वाह्या न तु कार्य्यत इति भावः, या कथा वर्षपर्य्यन्तं संवत्सरसाध्येति भावः, सा दिनद्वयादिजा दिवसद्वयादिभिः निर्वाह्या इत्यर्थः अन्या या विस्तरा अतिबहुला कथा सा बुधैः पण्डितैः अर्थोपक्षेपकैः अर्थसूचकैः वाक्यैः वक्ष्यमाणैर्विष्कम्भकादिभिरित्यर्थः सूच्या प्रकाश्या।

(द) वर्षादिति। यत् वस्तु वर्षात् ऊर्द्ध्वं वत्सराधिकसम्पाद्यमित्यर्थः तत् वर्षात् अधोभवं वर्षात् न्यूनकालेन निर्वाह्यमित्यर्थः।

(ध) अङ्कच्छेद इति। अङ्कस्य छेदे अवसाने सति यत् कार्य्यं मासकृतं वा वर्षसञ्चितं संवत्सरकृतमित्यर्थः तत् सर्वं वर्षात् ऊर्द्ध्वं कदाचित् न तु नैव कार्य्यम्।

एवञ्च चतुर्दशवर्षव्यापिन्यपि रामवनवासे ये ये विराधवधादयः कथांशाः ते ते वर्षवर्षावयवदिनयुग्मादीनामेकतमेन सूचनीया न विरुद्धाः।

दिनावसाने कार्य्यं यद्
दिनेनैवोपपद्यते।
अर्थोपक्षेपकैर्वाच्य-
मङ्कच्छेदं विधाय तत्॥ ३०७॥ [न]

के ते अर्थोपक्षेपका इत्याकाङ्क्षायामाह।

अर्थोपक्षेपकाः पञ्च विष्कम्भकप्रवेशकौ।
चूलिकाङ्कावतारोऽथ स्यादङ्कमुखमित्यपि॥ [प]
वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः।
सङ्क्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः॥
मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः।
शुद्धः स्यात् स तु सङ्कीर्णो नीचमध्यमकल्पितः
॥ ३०८॥ [फ]

---

(न) दिनेति। यत् कार्यं दिनेन सम्पूर्णेन दिवसेन उपपद्यते सम्पद्यते तत् अङ्कच्छेदम् अङ्कविरामं विधाय कृत्वा दिनावसाने अर्थोपक्षेपकैः विष्कम्भादिभिः वाच्यं वक्तव्यम्।

(प) अर्थोपक्षेपकानाह अर्थेति। अर्थस्य कार्यस्य उपक्षेपकाः उपस्थापयितारः पञ्च—विष्कम्भकः, प्रवेशकः, चूलिका, अङ्कावतारः, तथा अङ्कमुखम्।

(फ) विष्कम्भमाह वृत्तेति। वृत्तवर्त्तिष्यमाणानाम् अतीतानां भाविनां कथांशानां निदर्शकः सूचकः अङ्कस्य आदौ प्रथमं दर्शितः संक्षिप्तः संक्षिप्तार्थः

तत्र शुद्धो यथा। मालतीमाधवे श्मशाने कपालकुण्डला। सङ्कीर्णो यथा रामाभिनन्दे क्षपणककापालिकौ।

अथ प्रवेशकः।

प्रवेशकोऽनुदात्तोक्त्या
नीचपात्रप्रयोजितः।
अङ्कद्वयान्तर्विज्ञेयः
शेषं विष्कम्भके यथा॥ ३०९॥ [ब]

अङ्कद्वयस्यान्तरिति प्रथमाङ्केऽस्य प्रतिषेधः। यथा वेण्याम् अश्वत्थामाङ्के राक्षसमिथुनम्। अथ चूलिका।

अन्तर्जवनिकासंस्थैः
सूचनार्थस्य चूलिका॥ ३१०॥ [भ]

यथा वीरचरिते चतुर्थाङ्कस्यादौ। "नेपथ्ये भो भो वैमानिकाः! प्रवर्त्तन्तां रङ्गमङ्गलानि" इत्यादि "रामेण परशुरामो जितः" इति नेपथ्ये पात्रैः सूचितम्। अथ अङ्कावतारः।

---

यः कथाविभागः स विष्कम्भः। स तु मध्येन मध्यविधेन एकेन पात्रेण वा मध्यमाभ्यां पात्राभ्यां संप्रयोजितः चेत् भवति, स शुद्धः स्यात्। नीचमध्यमाभ्यां कल्पितश्चेत् सङ्कीर्णः विमिश्रः।

(ब) प्रवेशकमाह प्रवेशक इति। नीचपात्रप्रयोजितः अनुदात्तया प्राकृतया उक्त्या भाषया रचितः कथाविभागः प्रवेशकः, स तु अङ्कयोर्द्वयान्तः उभयाङ्कमध्ये इत्यर्थः विज्ञेयः, शेषं संक्षेपोक्तादि विष्कम्भके यथा विष्कम्भकवत् ज्ञेयमिति शेषः।

(भ) चूलिकामाह अन्तरिति। जवनिका तिरस्करिणी तस्याः अन्तःस्थैः जनैः या अर्थस्य कार्य्यस्य सूचना सा चूलिका।

अङ्कान्ते सूचितः पात्रै-
स्तदङ्कस्याविभागतः।
यत्राङ्कोऽवतरत्येषो-
ऽङ्कावतार इति स्मृतः॥ ३११ ॥ [ म ]

यथाभिज्ञाने पञ्चमाङ्के पात्रैः सूचितः षष्ठाङ्कस्तदङ्कस्याङ्गविशेष इवावतीर्णः। अथाङ्कमुखम्।

यत्र स्यादङ्क एकस्मि-
न्नङ्कानां सूचनाऽखिला।
तदङ्कमुखमित्याहु-
र्बीजार्थख्यापकञ्च तत्॥ ३१२ ॥ [ य ]

यथा मालतीमाधवे। प्रथमाङ्कादौ कामन्दक्यवलोकिते भूरिवसुप्रभृतीनां भाविभूमिकानां परिक्षिप्तकथाप्रबन्धस्य च (र) प्रसङ्गात् सन्निवेशं सूचितवत्यौ।

अङ्कान्तपात्रैर्वाङ्कास्यं
छिन्नाङ्कस्यार्थसूचनात्॥ ३१३ ॥ [ ल ]

---

(म) अङ्कावतारमाह अङ्कान्त इति। अङ्कस्य अन्ते अवसाने तदङ्कस्य अविभागतः अविच्छेदेन पात्रैः सूचितः यत्र यः इत्यर्थः अन्यदङ्कितम् अङ्कः अवतरति एषः अङ्कावतार इति स्मृतः कथितः।

(य) अङ्कमुखमाह यत्रेति। यत्र एकस्मिन् अङ्के अखिलानां सर्वेषाम् अङ्कानाम् अखिला समस्ता सूचना स्यात् तत् 'अङ्कमुखं' बीजार्थस्य मूलीभूतस्य विषयस्य व्यापकं सूचकञ्च इत्याहुः।

(र) भाविभूमिकानां भविष्यद्वेशधारिणाम्। परिक्षिप्तः संक्षिप्तः यः कथाप्रबन्धः तस्य।

अङ्कान्तपात्रैरङ्कान्ते प्रविष्टैः पात्रैः। यथा वीरचरिते द्वितीयाङ्कान्ते। "प्रविश्य सुमन्त्रः। भगवन्तौ वशिष्ठविश्वामित्रौ भवतः सभार्गवानाह्वयतः। इतरे। क्व भगवन्तौ। सुमन्त्रः। महाराजदशरथस्यान्तिके। इतरे। तत्तत्रैव गच्छामः" इत्यङ्कपरिसमाप्तौ "ततः प्रविशन्त्युपविष्टा वशिष्ठविश्वामित्रपरशुरामाः" इत्यत्र पूर्वाङ्कान्त एव प्रविष्टेन सुमन्त्रपात्रेण शतानन्दजनककथाविच्छेदे उत्तराङ्कमुखसूचनादङ्कास्यमिति। एतच्च ध्वनिकमतानुसारेणोक्तम्। अन्ये तु "अङ्कावतारेणैव इदं गतार्थम्" (व) इत्याहुः।

अपेक्षितं परित्यज्य नीरसं वस्तु विस्तरम्।
यदा सन्दर्शयेच्छेषमामुखानन्तरं तदा॥
कार्य्यो विष्कम्भको नाट्य आमुखाक्षिप्तपात्रकः
॥ ३१४ ॥ [ श ]

यथा रत्नावल्याम्। यौगन्धरायणप्रयोजितः।

यदा तु सरसं वस्तु मूलादेव प्रवर्त्तते।
आदावेव तदाङ्कः स्यादामुखाक्षेपसंश्रयः
॥ ३१५ ॥ [ ष ]

---

(ल) अङ्कान्तेति। अङ्कान्ते प्रविष्टैः पात्रैः नटैः छिन्नस्य छेदं प्राप्तस्य अर्थस्य सूचनात् वा अङ्कास्यम् अङ्कमुखम्।

(व) गतार्थं कृतार्थम्।

(श) अपेक्षितमिति। नीरसं विस्तरं वस्तु परित्यज्य शेषम् अपेक्षितं यदा सन्दर्शयेत् तदा नाट्ये आमुखानन्तरम् आमुखात् प्रस्तावनायाः अनन्तरम् आमुखेन आक्षिप्तम् आकृष्टं पात्रं यस्य तादृशः विष्कम्भकः कार्य्यः।

(ष) यदेति। यदा तु मूलादेव मूलमारभ्यैव सरसं वस्तु प्रवर्त्तते तदा आदौ एव आमुखम् अपेक्षते इति तयोक्तः संश्रयो यस्य तथाभूतः अङ्कः स्यात्।

यथा शाकुन्तले।

विष्कम्भकाद्यैरपि नो
वधो वाच्योऽधिकारिणः।
अन्योन्येन तिरोधानं
न कुर्य्याद्रसवस्तुनोः ॥ ३१६ ॥ [स]

रसः शृङ्गारादिः। यदुक्तं ध्वनिकेन।

"न चातिरसतो वस्तु दूरं विच्छिन्नतां नयेत्।
रसं वा न तिरोदध्याद् वस्त्वलङ्कारलक्षणैः" ॥ इति। (ह)

वीजं विन्दुः पताका च
प्रकरी कार्य्यमेव च।
अर्थप्रकृतयः पञ्च
ज्ञात्वा योज्या यथाविधि ॥ ३२० ॥ [च]

अर्थप्रकृतयः प्रयोजनसिद्धिहेतवः। तत्र वीजम्।

---

(स) विष्कम्भकाद्यैरिति। विष्कम्भकाद्यैरपि अधिकारिणः प्रधानस्य वधः न वाच्यः, तथा रसस्य वस्तुनः इतिवृत्तस्य अन्योन्येन परस्परेणेत्यर्थः तिरोधानं न कुर्य्यात् रसे इतिवृत्तयोगः इतिवृत्ते रसयोगः यथा स्यात् तथा रचयितव्यं नैतयोः परस्परं विच्छेदः कार्य्य इति भावः।

(ह) नेति। अतिरसतः रसस्यातिरेकेणेत्यर्थः वस्तु इतिवृत्तं दूरम् अत्यन्तं विच्छिन्नतां विच्छेदं न च नयेत् नैव प्रापयेत्, तथा वस्तुनः अलङ्कारलक्षणैः अलङ्कृतिरचनैरित्यर्थः रसं न तिरोदध्यात् न विच्छेदं नयेदित्यर्थः।

(च) वीजमिति। अर्थस्य प्रयोजनस्य प्रकृतयः सिद्धिहेतवः पञ्च। यथा—वीजं, विन्दुः, पताका, प्रकरी, तथा कार्य्यम्। एता ज्ञात्वा यथाविधि विधिमनतिक्रम्य योज्याः प्रयोक्तव्या इत्यर्थः।

अल्पमात्रं समुद्दिष्टं
बहुधा यद् विसर्पति ।
फलस्य प्रथमो हेतु-
र्वीजं तदभिधीयते ॥ ३१८ ॥ [ क ]

यथा रत्नावल्यां वत्सराजस्य रत्नावलीप्राप्तिहेतुर्दैवानुकूल्य-लालितो यौगन्धरायणव्यापारः। यथा वा वेण्यां द्रौपदी-केशसंयमनहेतुर्भीमसेनक्रोधोपचितो युधिष्ठिरोत्साहः (ख)।

अवान्तरार्थविच्छेदे
विन्दुरच्छेदकारणम् ॥ ३१९ ॥ [ ग ]

यथा रत्नावल्यामनङ्गपूजापरिसमाप्तौ कथार्थविच्छेदे सति उदयनस्येन्दोरिवोद्वीक्ष्यते इति सागरिका श्रुत्वा सहर्षम्। "कधं एसो सो उदअणणरिंदो" इत्यादिरवान्तरार्थहेतुः (घ)।

व्यापि प्रासङ्गिकं वृत्तं
पताकेत्यभिधीयते ॥ ३२० ॥ (ङ)

---

( क ) वीजमाह अल्पमात्रमिति। यत् अल्पमात्रं यत्किञ्चित् समुद्दिष्टं सत् बहुधा विसर्पति विस्तारं गच्छति तत् फलस्य प्रथमो हेतुः कारणं वीजम् अभिधीयते कथ्यते।

( ख ) रत्नावलीप्राप्तिहेतुरिति रत्नावलीप्राप्तिरेव फलं बोध्यम्। द्रौपदी-केशसंयमनहेतुः वेणीसंहारनाटकस्य फलं द्रौपद्याः केशसंयमनं बोध्यम्।

( ग ) विन्दुमाह अवान्तरेति। अवान्तरस्य महावाक्यरूपसन्दर्भैकदेशस्य विच्छेदे समाप्तौ अच्छेदस्य अविरामस्य कारणं विन्दुः।

( घ ) उदाहरति यथेति। कामपूजारूपस्य सन्दर्भैकदेशस्य समाप्तौ एव स उदयननरेन्द्र इत्यनेन सागरिकाया वत्सराजं प्रति अनुरागस्य अविरामः।

( ङ ) पताकामाह व्यापीति। व्यापि व्यापकं निर्वहणपर्यन्तस्थायीत्यर्थः प्रासङ्गिकं प्रसङ्गतः आगतं वृत्तं चरितं पताका इति अभिधीयते।

यथा रामचरिते सुग्रीवादेर्वेण्यां भीमादेः शाकुन्तले विदूषकस्य चरितम् ।

पताका नायकस्य स्या-
न्न स्वकीयफलान्तरम् ।
गर्भे सन्धौ विमर्षे वा
निर्वाहस्तस्य जायते ॥३२१॥ [च]

यथा सुग्रीवादेराज्यप्राप्त्यादिः । यत्तु मुनिनोक्तम् ।

"आगर्भादाविमर्षाद्वा पताका विनिवर्त्तते" इति ॥ (छ)

तत्र "पताकेति पताका नायकफलं निर्वहणपर्य्यन्तमपि पताकायाः प्रवृत्तिदर्शनात्" इति व्याख्यातमभिनवगुप्तपादैः ।

प्रासङ्गिकं प्रदेशस्थं चरितं प्रकरी मता ॥ ३२२ ॥

यथा कुलपत्यङ्के रावणस्य जटायुसंवादः ।

प्रकरी नायकस्य स्यान्न स्वकीयं फलान्तरम् । [ज]

---

(च) पताकेति । पताका नायकस्य स्वकीयफलान्तरं निजप्रयोजनविशेषोपयोगिनीत्यर्थः न स्यात् गर्भे वा विमर्षे सन्धौ तस्य फलान्तरस्य निर्वाहः जायते ।

(छ) आगर्भादिति । आगर्भात् गर्भसन्धिपर्य्यन्तम् आविमर्षात् विमर्षसन्धिपर्य्यन्तं पताका विनिवर्त्तते । अत्र पताकाशब्देन पताकानायकफलं बोध्यम् ।

(ज) प्रकरीमाह प्रासङ्गिकमिति । प्रासङ्गिकं प्रसङ्गतः प्राप्तं प्रदेशस्थम् एकदेशस्थायि चरितं प्रकरी मता । सा तु नायकस्य स्वकीयं फलान्तरं फलविशेषः न स्यात् ।

अपेक्षितन्तु यत्साध्यमारम्भो यन्निबन्धनः ॥
समापनन्तु यत्सिद्धै तत्कार्य्यमिति सम्मतम्
॥ ३२३ ॥ [झ]

यथा रामचरिते रावणवधः।

अवस्थाः पञ्च कार्य्यस्य
प्रारब्धस्य फलार्थिभिः।
आरम्भयत्नप्राप्त्याशा-
नियताप्तिफलागमाः ॥३२४॥ [ञ]

तत्र।

भवेदारम्भ औत्सुक्यं
यन्मुख्यफलसिद्धये ॥३२५॥ [ट]

यथा रत्नावल्याम्। रत्नावल्यन्तःपुरनिवेशार्थं यौगन्धरायणस्य औत्सुक्यम्। एवं नायकनायिकादीनामपि औत्सुक्यमाकरेषु बोद्धव्यम् (ठ)।

---

(झ) कार्य्यमाह अपेक्षितमिति। यत् साध्यं साधनीयम् अपेक्षितम् आकाङ्क्षितं, यन्निबन्धनः यदर्थः आरम्भः उद्योगः, तथा यस्य सिद्धै सिद्ध्यर्थं समापनं सामग्रीसमवधानं तत् कार्य्यमिति सम्मतम्।

(ञ) कार्य्यस्य अवस्थाभेदानाह अवस्था इति। फलार्थिभिः फललाभाभिलाषिभिः प्रारब्धस्य कार्य्यस्य पञ्च अवस्थाः—आरम्भः, यत्नः, प्राप्त्याशा, नियताप्तिः, तथा फलागम इति।

(ट) आरम्भमाह भवेदिति। मुख्यस्य प्रधानस्य फलस्य सिद्ध्यै यत् औत्सुक्यं स आरम्भः भवेत्।

(ठ) उदाहरति यथेति। अत्र रत्नावलीलाभ एव मुख्यं फलं बोध्यम्।

प्रयत्नस्तु फलावाप्तौ
व्यापारोऽतित्वरान्वितः ॥ ३२६ ॥ [ड]

यथा रत्नावल्याम्। "तहवि ण अत्थि अण्णो दंसणो-वाओत्ति जधा तधा आलिहिअ जधासमीहिदं करइस्सं" (ढ) इत्यादिना प्रतिपादितो रत्नावल्याश्चित्रलेखनादिर्वत्सराज-सङ्गमोपायः। यथा च रामचरिते समुद्रबन्धनादिः।

उपायापायशङ्काभ्यां
प्राप्त्याशा प्राप्तिसम्भवः ॥३२७॥ [ण]

यथा रत्नावल्यां तृतीयेऽङ्के। वेशपरिवर्त्तनाभिसरणादेः सङ्गमोपायाद्वासवदत्तालक्षणापायशङ्कया च अनिर्द्धारितै-कान्तसङ्गमरूपफलप्राप्तिः प्रत्याशा (त)। एवमन्यत्र।

अपायाभावतः प्राप्ति-
र्नियताप्तिस्तु निश्चिता ॥३२८॥ [थ]

अपायाभावान्निर्द्धारितैकान्तफलप्राप्तिर्नियताप्तिः। यथा

---

(ड) यत्नमाह प्रयत्न इति। फलस्य प्रधानफलस्य अवाप्तौ प्राप्त्यर्थम् अतित्वरान्वितः व्यापारः चेष्टा प्रयत्नः।

(ढ) उदाहरति यथेति। तहवीति। तथापि नास्त्यन्यो दर्शनोपाय इति यथा तथा आलिख्य यथासमीहितं करिष्यामीति संस्कृतम्।

(ण) प्राप्त्याशामाह उपायेति। उपायापायशङ्काभ्याम् उपायस्य अपायस्य विघ्नस्य च शङ्कया ताभ्यां प्राप्तौ फलस्येति भावः सम्भवः सम्भावना प्राप्त्याशा।

(त) उदाहरति यथेति। स्पष्टम्।

(थ) नियताप्तिमाह अपायेति। अपायस्य विघ्नस्य अभावतः अभावात् निश्चिता प्राप्तिः फललाभः नियताप्तिः।

रत्नावल्याम्। "राजा। देवीप्रसादनं त्यक्त्वा नान्यमत्रोपायं पश्यामि" इति। देवीलक्षणापायस्य प्रसादनेन निवारणान्नियतफलप्राप्तिः सूचिता (द)।

सावस्था फलयोगः स्याद्
यः समग्रफलोदयः ॥ ३२९ ॥ [ध]

यथा रत्नावल्यां रत्नावलीलाभचक्रवर्त्तित्वलक्षणफलान्तरलाभसहितः (न)। एवमन्यत्र।

यथासंख्यमवस्थाभिराभिर्योगात् तु पञ्चभिः।
पञ्चधैवेतिवृत्तस्य भागाः स्युः पञ्च सन्धयः॥३३०॥[प]

तल्लक्षणमाह।

अन्तरैकार्थसम्बन्धः
सन्धिरेकान्वये सति ॥ ३३१ ॥ [फ]

---

(द) उदाहरति यथेति। स्पष्टम्।

(ध) फलागममाह सेति। यः समग्रस्य सकलस्य फलस्य उदयः, सा अवस्था फलयोगः फलागमः स्यात्।

(न) उदाहरति यथेति। स्पष्टम्।

(प) यथेति। आभिः पञ्चभिः अवस्थाभिः आरम्भप्रभृतिभिरित्यर्थः यथासंख्यं योगात् इतिवृत्तस्य सन्दर्भवस्तुनः पञ्चधा एव पञ्चप्रकारा एव भागाः पञ्च सन्धयः स्युः। अतश्च आरम्भयोगिनी अवस्था मुखसन्धिः, यत्नयोगिनी अवस्था प्रतिमुखसन्धिः, प्रत्याशायोगिनी अवस्था गर्भसन्धिः, नियताप्तियोगिनी अवस्था विमर्षसन्धिः, फलागमयोगिनी अवस्था उपसंहृतिसन्धिरिति बोध्यम्।

(फ) सन्धिमाह अन्तरैकार्थसम्बन्ध इति। एक एव अन्वयः प्रयोजनं तस्मिन् सति अन्तरा मध्ये एकार्थसम्बन्धः एकेन अपरेणेत्यर्थः अर्थेन सम्बन्धः संयोगः सन्धिः।

एकेन प्रयोजनेनान्वितानां कथांशानामवान्तरैकप्रयोजनसम्बन्धः सन्धिः। तद्भेदानाह।

मुखं प्रतिमुखं गर्भो विमर्ष उपसंहृतिः।
इति पञ्चास्य भेदाः स्युः क्रमाल्लक्षणमुच्यते॥
३३२॥ [ब]

यथोद्देशं लक्षणमाह।

यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा।
प्रारम्भेण समायुक्ता तन्मुखं परिकीर्त्तितम्॥
३३३॥ [भ]

यथा रत्नावल्यां प्रथमेऽङ्के (म)।

फलप्रधानोपायस्य मुखसन्धिनिवेशिनः।
लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखञ्च तत्॥
३३४॥ [य]

---

(ब) मुखमिति। स्पष्टम्।

(भ) मुखसन्धिमाह यत्रेति। यत्र अंशे नाना अर्थाः रसाः शृङ्गारादयश्च तेषां सम्भवः, यत्र तादृशी प्रारम्भेण प्रकृष्टयत्नेन समायुक्ता बीजस्य सन्दर्भमूलकारणस्य समुत्पत्तिः समुद्भवः, तत् मुखं मुखसन्धिरित्यर्थः परिकीर्त्तितम्।

(म) उदाहरति यथेति। अत्र रत्नावलीवत्सराजयोरनुरागरूपस्य बीजस्य उत्पत्तिः।

(य) प्रतिमुखसन्धिमाह फलेति। यत्र मुखसन्धिनिवेशिनः मुखसन्धौ स्थितस्य फलप्रधानोपायस्य फलस्य प्रधानफलस्य यः प्रधानम् उपायः तस्य बीजस्येत्यर्थः लक्ष्यालक्ष्य इव ईषल्लक्ष्य इव उद्भेदः प्रकाशः, तत् प्रतिमुखं प्रतिमुखसन्धिरित्यर्थः।

यथा रत्नावल्यां द्वितीयेऽङ्के वत्सराजसागरिकासमागम-हेतोरनुरागबीजस्य प्रथमाङ्कोपक्षिप्तस्य सुसङ्गताविदूषकाभ्यां ज्ञायमानतया किञ्चिल्लक्ष्यस्य वासवदत्तया चित्रफलकवृत्ता-न्तेन किञ्चिदुन्नीयमानेऽस्य उद्दृश्यरूप उद्भेदः (र)।

**फलप्रधानोपायस्य प्रागुद्भिन्नस्य किञ्चन।**
**गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान्मुहुः**
**॥ ३३५॥ [ल]**

फलस्य गर्भीकरणाद्गर्भः (व)। यथा रत्नावल्यां द्वितीयेऽङ्के सुसङ्गता। "सहि! अदक्खिणा दाणिसि तुमं जा एवं भट्टिणा हत्थेण गहिदावि कोवं ण मुञ्चसि" (१) इत्यादौ समुद्भेदः। पुनर्वासवदत्ताप्रवेशे ह्रासः। तृतीयेऽङ्के "तद्वार्त्तान्वेषणाय गतः कथञ्चिरयति वसन्तकः" इत्यन्वेषणम्। "विदू। ही ही भो! कोसम्बीरज्जलम्भेणावि ण तादिसो पिअवअस्सस्स परितोसो जादिसो मम सआसादो पिअवअणं सुणिअ भवि-स्सदि" (२) इत्यादौ उद्भेदः। पुनरपि वासवदत्ताप्रत्यभि-

---

(१) सखि अदक्षिणा इदानीमसि त्वं यदेवं भर्त्रा हस्तेन गृहीतापि कोपं न मुञ्चसीति सं०।

(२) ही हीति। कौशाम्बीराज्यलाभेनापि न तादृशः प्रियवयस्यस्य परितोषो यादृशो मम सकाशात् प्रियवचनं श्रुत्वा भविष्यतीति सं०।

---

(र) उदाहरति यथेति। सागरिकावत्सराजसमागमः प्रधानफलम्।

(ल) गर्भसन्धिमाह फलेति। यत्र फलस्य प्रधानस्य यः प्रधानम् उपायः तस्य प्राक् पूर्वम् उद्भिन्नस्य उद्भेदं गतस्य किञ्चिल्लक्ष्यतया प्रकाशितस्य बीज-स्येति भावः मुहुः पुनः पुनः ह्रासान्वेषणवान्, क्वचित् तिरोभाववान्, क्वचिद्वा अनुसन्धानवान् समुद्भेदः सम्यक् प्रकाशः गर्भः गर्भसन्धिरित्यर्थः।

(व) गर्भीकरणात् अन्तर्गतकरणादित्यर्थः।

स्थानात् त्रासः। पुनः सागरिकायाः सङ्केतस्थानगमने अन्वेषणम्। पुनर्लतापाशकरणे उद्भेदः (प)। अथ विमर्षः।

यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः।
शापाद्यैः सान्तरायश्च स विमर्ष इति स्मृतः॥
३३६॥ [ ष ]

यथा शाकुन्तले चतुर्थाङ्कादौ। "अनुसूया। पिअंवदे! जइवि गान्धव्वेण विवाहेन णिव्वित्तकल्लाणा पियसही सउन्तला तधावि अणुरूअभत्तिभाइणी सम्वुत्तत्ति णिव्वुदं मे हिअअं" (३) इत्यत आरभ्य सप्तमाङ्कोपक्षिप्तात् प्रागर्थसञ्चयः (स) शकुन्तलाविस्मरणरूपविघ्नालिङ्गितः। अथ निर्वहणम्।

वीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम्।
एकार्थमुपनीयन्ते यत्र निर्वहणं हि तत्॥
३३७॥ [ ह ]

---

(३) पिअंवदे इति। प्रियंवदे यद्यपि गान्धर्वेण विवाहेन निर्वृत्तकल्याणा प्रियसखी शकुन्तला तथापि अनुरूपभर्तृभागिनी संवृत्तेति निर्वृतं मे हृदयमिति सं०।

---

(प) उदाहरति यथेति। स्पष्टम्।

(ष) विमर्षसन्धिमाह यत्रेति। यत्र मुख्यफलस्य प्रधानफलस्य उपायः गर्भतः गर्भसन्धिमपेक्ष्य इत्यर्थः उद्भिन्नः प्रकाशितः शापाद्यैः अभिसम्पातप्रभृतिभिः आद्यशब्देन भयादिग्रहणं सान्तरायः सविघ्नश्च स विमर्ष इति स्मृतः कथितः।

(स) उदाहरति यथेति। सप्तमाङ्कोपक्षिप्तात् सप्तमाङ्के उपक्षिप्तम् उपसंहृतं तस्मात्, भावे क्तप्रत्ययः। अर्थसञ्चयः फलसमुदायः।

(ह) निर्वहणसन्धिमाह वीजेति। यत्र यथायथं यथाप्रदेशं विप्रकीर्णाः

यथा वेण्याम्। "कञ्चुकी। (उपसृत्य सहर्षम्) महाराज! वर्द्धसे। अयं खलु भीमसेनो दुर्य्योधनक्षतजारुणीकृतसर्व्वशरीरो दुर्लक्ष्यव्यक्तिः" इत्यादिना द्रौपदीकेशसंयमनादिमुखसन्ध्यादिवीजानां निजनिजस्थानोपक्षिप्तानामेकार्थयोजनम्। यथा वा शाकुन्तले सप्तमाङ्के शकुन्तलाभिज्ञानादुत्तरोऽर्थराशिः (च)। एषामङ्गान्याह।

**उपक्षेपः परिकरः परिन्यासो विलोभनम्।**
**युक्तिः प्राप्तिः समाधानं विधानं परिभावना।**
**उद्भेदः करणं भेद एतान्यङ्गानि वै मुखे॥**
**३३८॥ [क]**

यथोद्देशं लक्षणमाह।

**काव्यार्थस्य समुत्पत्ति-**
**रुपक्षेप इति स्मृतः॥ ३३९॥ [ख]**

काव्यार्थं इतिवृत्तलक्षणप्रस्तुताभिधेयः। यथा वेण्यां भीमः।

---

विनिवेशिताः वीजवन्तः मूलकारणसमन्विताः मुखाद्यर्थाः मुखसन्धिप्रभृतिरूपा अर्थाः कार्य्याणि एकार्थम् एकप्रयोजनम् उपनीयन्ते प्राप्यन्ते तत् हि निर्वहणं निर्वहणसन्धिरुपसंहार इत्यर्थः।

(च) उदाहरति यथेति। दुर्लक्ष्यव्यक्तिः दुर्लक्ष्या दुःखेन लक्षणीया व्यक्तिः प्रकाशः यस्य तादृशः स एवायमिति निश्चेतुमशक्य इत्यर्थः। शकुन्तलाभिज्ञानात् शकुन्तलेयम् इति प्रत्यभिज्ञानात् उत्तरः अनन्तरोक्त इत्यर्थः अर्थराशिः कार्य्यसमुदायः।

(क) मुखसन्धेरङ्गान्याह उपक्षेप इति। स्पष्टम्।

(ख) उपक्षेपमाह काव्येति। काव्यार्थस्य सन्दर्भप्रतिपाद्यस्य समुत्पत्तिः संक्षेपेण उत्क्षेपणम् उत्थापनमित्यर्थः उपक्षेप इति स्मृतः।

"लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य।
आकृष्य पाण्डववधूपरिधानकेशान्
सुस्था भवन्ति मयि जीवति धार्त्तराष्ट्राः" ॥ (ग)

**समुत्पन्नार्थबाहुल्यं**
**ज्ञेयः परिकरः पुनः ॥ ३४० ॥ [घ]**

यथा तत्रैव।

"प्रवृद्धं यद्वैरं मम खलु शिशोरेव कुरुभि-
र्न तत्रार्य्यो हेतुर्न भवति किरीटी न च युवाम्।
जरासन्धस्योरःस्थलमिव विरूढं पुनरपि
क्रुधा भीमः सन्धिं विघटयति यूयं घटयत" ॥ (ङ)

---

(ग) उदाहरति लाक्षेति। धार्त्तराष्ट्राः धृतराष्ट्रसुताः दुर्य्योधनादयः लाक्षागृहानलविषान्नसभाप्रवेशैः लाक्षागृहानलेन विषान्नप्रयोगेण सभायां द्यूतक्रीड़ार्थम् आह्वानेन इत्यर्थः प्राणेषु वित्तनिचयेषु धनसमुदायेषु च नः अस्मान् प्रहृत्य प्रथमद्वितीयाभ्यां द्वाभ्यामुपायाभ्यां प्राणनिधनार्थं चेष्टयित्वा तृतीयेनोपायेन धनानि हृत्वा इत्यर्थः, पुनश्च तृतीयेन पाण्डवानां या वधूः पाञ्चाली तस्याः परिधानं वस्त्रं केशांश्च आकृष्य मयि जीवति सुस्था भवन्ति ? शार्दूलविक्रीड़ितं वृत्तम्। अत्र द्रौपदीकेशसंयमनरूपस्य काव्यार्थस्य समुत्थापनम्।

(घ) परिकरमाह समुत्पन्नेति। समुत्पन्नस्य समुत्थितस्य अर्थस्य काव्यार्थस्य बाहुल्यं विस्तारः सूचनमित्यर्थः परिकरः ज्ञेयः।

(ङ) उदाहरति प्रवृद्धमिति। कुरुभिः धार्त्तराष्ट्रैरित्यर्थः शिशोरेव मम यत् वैरं विद्वेषः प्रवृद्धं खलु तत्र वैरे आर्य्यः गुरुत्वात् माननीयः युधिष्ठिरः न हेतुः न कारणं, किरीटी अर्जुनश्च न हेतुः, युवामपि नकुलसहदेवावपीत्यर्थः न हेतू इति शेषः। अहमेव विद्वेषकारणं कुरूणामिति भावः। तस्मात् भीमः क्रुधा कोपेन जरासन्धस्य उरःस्थलमिव विरूढं विशेषेण निचितं सन्धिं विघटयति भिनत्ति, यूयं पुनः घटयत योजयत। भवद्भिः कृतमपि सन्धिमहं भेत्स्यामी-

तन्निष्पत्तिः परिन्यासः ॥ ३४१ ॥ [च]

यथा तत्रैव ।

"चञ्चद्भुजभ्रमितचण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि ! भीमः" ॥ (छ)

अत्र उपक्षेपो नाम इतिवृत्तलक्षणस्य काव्याभिधेयस्य संक्षेपेणोपक्षेपणमात्रम् । परिकरस्तस्यैव बहुलीकरणम् । परिन्यासस्ततोऽपि (ज) निश्चयापत्तिरूपतया परितो हृदये न्यसनमित्येषां भेदः । एतानि च अङ्गानि उक्तेनैव पौर्वापर्य्येण भवन्ति । अङ्गान्तराणि तु अन्यथापि ।

---

त्यर्थः । सन्धिकरणार्थमुद्यतस्य राज्ञः सन्देशमादाय आवयन्तं सहदेवं प्रति भीमसेनस्य उक्तिरियम् । शिखरिणीवृत्तम् । अत्र सन्धिविघटनेन वैरनिर्यातनस्य समधिकं सूचनम् ।

(च) परिन्यासमाह तन्निष्पत्तिरिति । तस्य काव्यार्थस्य निष्पत्तिः निश्चयेन संकीर्त्तनं परिन्यासः ।

(छ) उदाहरति चञ्चदिति । हे देवि ! पाञ्चालि ! भीमः चञ्चता स्फुरता भुजेन भ्रमिता घूर्णिता या चण्डा भीषणा गदा तस्याः अभिघातेन प्रहारेण संचूर्णितं ऊरुयुगलं यस्य तथाविधस्य सुयोधनस्य दुर्योधनस्य स्त्यानेन विस्तरेण अवनद्धं संसक्तं यत् घनं गाढं शोणितं तेन शोणः रक्तः पाणिर्यस्य तथाभूतः सन् तव कचान् केशान् उत्तंसयिष्यति भलङ्करिष्यति रक्ताक्तहस्तेन संयमनादिति भावः । वसन्ततिलकं वृत्तम् ।

(ज) अत्रेत्यादि । उपक्षेपणमात्रम् उत्थापनमात्रम् । बहुलीकरणं विस्तारेण सूचनम् । उक्तेनैव कथितेनैव । अन्यथा वैपरीत्येन अपिकारात् क्रमेण अपीत्यर्थः ।

## गुणाख्यानं विलोभनम् ॥ ३४२ ॥ [झ]

यथा तत्रैव। "द्रौपदी। णाध! किं दुक्करं तुए परिकुविदेण" (४)। यथा वा मम चन्द्रकलायां चन्द्रकलावर्णने "सेयं तारुण्यस्य विलासः" इत्यादि। यत्तु शाकुन्तलादिषु "ग्रीवाभङ्गाभिरामम्" इत्यादि मृगादिगुणवर्णनं तद्बीजार्थसम्बन्धाभावान्न सन्ध्यङ्गम्। एवमङ्गान्तराणामप्यूह्यम्।

## सम्प्रधारणमर्थानां युक्तिः ॥ ३४३ ॥

यथा वेण्यां सहदेवो भीमं प्रति। "आर्य्य! किं महाराजसन्देशोऽव्युत्पन्न एवार्य्येण गृहीतः" इति। अतःप्रभृति यावद्भीमवचनम्।

"युष्मान् ह्रेपयति क्रोधाल्लोके शत्रुकुलक्षयः।
न लज्जयति दाराणां सभायां केशकर्षणमिति" ॥ (ट)

## प्राप्तिः सुखागमः ॥ ३४४ ॥ [ठ]

---

(४) णाधेति। नाथ! किं दुष्करं त्वया परिकुपितेनेति सं०।

---

(झ) विलोभनमाह गुणाख्यानमिति। गुणानाम् आख्यानं कथनं विलोभनं विशेषेण लोभप्रदर्शनमित्यर्थः छलनं वा।

(ञ) युक्तिमाह सम्प्रधारणमिति। अर्थानां कर्त्तव्यानां सम्प्रधारणं निश्चयः।

(ट) उदाहरति यथेति। अव्युत्पन्नः अनवहितः। युष्मानिति। लोके जगति क्रोधात् शत्रूणां कुलक्षयः युष्मान् ह्रेपयति लज्जयति, सभायां दाराणां पत्न्या इत्यर्थः केशकर्षणं न लज्जयति। अत्र शत्रुकुलक्षयस्य कार्य्यस्य निश्चयेन कर्त्तव्यतासूचनम्।

(ठ) प्राप्तिमाह प्राप्तिरिति। सुखस्य आगमः उदयः लाभ इत्यर्थः प्राप्तिः।

यथा तत्रैव।

"मथ्नामि कौरवशतं समरे न कोपात्"

इत्यादि द्रौपदी श्रुत्वा सहर्षम्। "णाध! अस्सुदपुव्वं क्खु एदं वअणं ता पुणो पुणो भण" (५)।

**वीजस्यागमनं यत्तु तत्समाधानमुच्यते॥३४५॥ [ड]**

यथा तत्रैव।

"नेपथ्ये भो भो! विराटद्रुपदप्रभृतयः! श्रूयताम्"।

"यत् सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता।
तद् द्यूतारणिसम्भृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत् कुरुवने यौधिष्ठिरं जृम्भते"॥ (ठ)

अत्र "सुस्था भवन्ति मयि जीवति" इति आदिवीजस्य प्रधाननायकाभिमतत्वेन सम्यगाहितत्वात् समाधानम्।

---

(५) णाधेति। नाथ! अश्रुतपूर्वं खल्विदं वचनं तत् पुनः पुनर्भण इति सं०

---

(ड) समाधानमाह वीजस्येति। वीजस्य मूलकारणस्य आगमनं प्रधान-लक्ष्यगतत्वेन कीर्त्तनमित्यर्थः यत् तत् समाधानम् उच्यते।

(ढ) उदाहरति यथेति। यदिति। सत्यव्रतस्य सत्यरक्षणरूपनियमस्य द्वादशवर्षवनवासरूपस्य एकवर्षाज्ञातवासरूपस्य चेत्यर्थः भङ्गात् भीरु मनः यस्य तादृशेन यत्नेन यत् मन्दीकृतं खर्वीकृतं कुलस्य शान्तिम् अचयतामित्यर्थः इच्छता शमवता शान्तेन मनसा यत् विस्मर्तुमपि ईहितं चेष्टितं द्यूतमेव अरणिरग्निमन्थन-दारुविशेषः तेन सम्भृतं समुत्पन्नं नृपसुतायाः द्रौपद्याः केशानां अम्बरस्य वस्त्रस्य

सुखदुःखकृतो योऽर्थ-
स्तद्विधानमिति स्मृतम् ॥ ३४६ ॥ [ण]

यथा बालचरिते।

"उत्साहातिशयं वत्स! तव बाल्यञ्च पश्यतः।
मम हर्षविषादाभ्यामाक्रान्तं युगपन्मनः" ॥ (त)

यथा वा मम प्रभावत्याम् "नयनयुगासेचनकम्" इत्यादि।

कुतूहलोत्तरा वाचः
प्रोक्ता तु परिभावना ॥ ३४७ ॥ [थ]

यथा वेण्यां "द्रौपदि। युद्धं स्यान्न वा" इति संशयाना तूर्य्यशब्दानन्तरम् (द)।

---

च आकर्षणैः आकर्षणरूपैर्वायुभिरिति भावः उद्दीपितमिति शेषः तत् महत् इदं युधिष्ठिरस्य इदं यौधिष्ठिरं क्रोधज्योतिः कोपाग्निरित्यर्थः कुरुवने जृम्भते परिस्फुरति। शार्दूलविक्रीडितं वृत्तम्। अत्र आदिबीजस्य भीमसेनोत्साहरूपस्य इत्यर्थः सम्यगाहितत्वात् सम्पूर्णतया उत्तेजितत्वादित्यर्थः।

(ण) विधानमाह सुखेति। सुखदुःखाभ्यां कृतः विमिश्रित इत्यर्थः यः अर्थः कार्यं तत् विधानमिति स्मृतम्।

(त) उदाहरति यथेति। उत्साहातिशयमिति। रामं प्रति परशुरामस्योक्तिरियम्। हे वत्स! तव उत्साहातिशयं बाल्यं शैशवञ्च पश्यतः मम मनः हर्षविषादाभ्यां युगपत् आक्रान्तम्। तव उत्साहदर्शने अविघ्नमहावीरत्वसम्भावनया हर्षः, बाल्यदर्शनेनाहं कथमनेन सह योत्स्ये इति विषाद इत्युभयोर्विमिश्रणं बोध्यम्।

(थ) परिभावनामाह कुतूहलेति। कुतूहलम् औत्सुक्यं तदुत्तराः तदनूदिता इत्यर्थः प्रोक्ताः कथिताः वाचः वाक्यानि परिभावना।

(द) उदाहरति यथेति। स्पष्टम्।

"णाध ! किं दाणिं एसो पलअजलहरत्थणिदमंथरो खणे खणे समरदुंदुभि ताड़ीअदि" (६)।

**वीजार्थस्य प्ररोहः स्यादुद्भेदः॥ ३४८ ॥ [ध]**

यथा तत्रैव। "द्रौपदी। णाध! पुणोवि तए समासादइदव्वा (७)। भीमः।

"भूयः परिभवक्लान्तिलज्जाविधुरिताननम्।
अनिःशेषितकौरव्यं न पश्यसि वृकोदरम्" ॥ (न)

करणं पुनः।

**प्रकृतार्थ समारम्भः ॥ ३४९ ॥ [प]**

यथा तत्रैव "देवि! गच्छामो वयमिदानीं कुरुकुलक्षयाय" इति (फ)।

---

(६) णाधेति। नाथ! किमिदानीमेव प्रलयजलधरस्तनितमन्थरः क्षणे क्षणे समरदुन्दुभिस्ताड्यते इति सं०।

(७) णाधेति। नाथ! पुनरपि त्वया समासादयितव्या इति सं०।

---

(ध) उद्भेदमाह वीजेति। वीजार्थस्य मूलीभूतविषयस्य प्ररोहः अङ्कुरोदयः उद्भेदः स्यात्।

(न) उदाहरति यथेति। समासादयितव्या प्राप्तव्या मत्सन्निधौ आगन्तव्यमित्यर्थः। भूय इति। परिभवेण अवुध: अवमानेन या क्लान्तिः ततो या लज्जा तया विधुरितम् अवनतमित्यर्थः आननं यस्य तम् अनिःशेषिताः निःशेषतामनीताः कौरव्याः येन तादृशं वृकोदरं भीमं भूयः पुनः न पश्यसि न द्रक्ष्यसीत्यर्थः, भविष्यत्सामीप्ये लट्। अत्र वीजार्थस्य वैरनिर्यातनार्थमुत्पन्नस्य क्रोधस्य प्ररोहः।

(प) करणमाह करणमिति। प्रकृतस्य प्रस्तुतस्य अर्थस्य विषयस्य समारम्भः सम्यक् आरम्भः उद्योगः करणम्।

(फ) उदाहरति यथेति। स्पष्टम्।

भेदः संहतिभेदनम् ॥ ३५० ॥ [ व ]

यथा तत्रैव । अतएव अद्य प्रभृति भिन्नोऽहं भवद्भ्यः । केचित्तु "भेदः प्रोत्साहना" इति वदन्ति ( भ ) । अथ प्रतिमुखाङ्गानि ।

विलासः परिसर्पश्च विधूतं तापनं तथा ।
नर्म नर्मद्युतिश्चैव तथा प्रगमनं पुनः ॥
विरोधश्च प्रतिमुखे तथा स्यात् पर्य्युपासनम् ।
पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि ॥३५१॥ [म]

तत्र ।

समीहा रतिभोगार्था
विलास इति कथ्यते ॥ ३५२ ॥ [ य ]

रतिलक्षणस्य भावस्य यो हेतुभूतो भोगो विषयः प्रमदा पुरुषो वा तदर्था समीहा विलासः । यथा शाकुन्तले ।

"कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि ।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते" ॥ (र)

---

( व ) भेदमाह भेद इति । संहतेः सङ्घातस्य भेदनं पृथक्करणं भेदः स्यात् ।

( भ ) उदाहरति यथेति । भवद्भ्यः भिन्नः युष्मद्भिन्नः पृथग्भूतः स्वतन्त्रो जात इत्यर्थः । स्पष्टम् ।

( म ) प्रतिमुखाङ्गान्याह यथेति । विलासादयस्त्रयोदश प्रतिमुखस्य अङ्गानि ।

( य ) विलासमाह तत्रेति । तत्र तेषु मध्ये रतिभोगार्था सुरतसम्भोगविषयिणी समीहा चेष्टा स्पृहा वा विलास इति कथ्यते ।

( र ) उदाहरति काममिति । प्रिया शकुन्तला कामं सम्यक् न सुलभा न सुप्रापा इत्यनयोरन्वयः । मनस्तु तस्या भावदर्शनेन मदनुरागव्यञ्जकचेष्टा-

**दृष्टनष्टानुसरणं परिसर्पश्च कथ्यते ॥ ३५३ ॥ [ल]**

यथा शाकुन्तले । "राजा । भवितव्यमत्र तया" । तथाहि ।

"अत्युन्नता पुरस्तादवगाढ़ा जघनगौरवात्पश्चात् ।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा" ॥ (व)

**कृतस्यानुनयस्यादौ विधूतं त्वपरिग्रहः ॥३५४॥ [श]**

यथा तत्रैव । "अलं वो अंतःपुरविरहपज्जुस्सुएण राएसिणा उवरुध्धेण" (८) । केचित्तु "विधूतं स्यादरतिः" इति वदन्ति (ष) ।

---

(८) अलमिति । अलं वोऽन्तःपुरविरहपर्य्युत्सुकेन राजर्षिणा उपरुद्धेन इति सं० ।

---

विशेषदर्शनेन आश्वासि आश्वस्तं प्रिया लभ्येति आश्वासे इत्यर्थः । मनसिजे कामे अकृतार्थे अकृतकार्य्येऽपि उभयोः स्त्रीपुंसयोः प्रार्थना अन्योन्यकामना रतिम् अनुरागं कुरुते जनयति । अत्र नायिकासम्भोगविषयिणी स्पृहा प्रदर्शिता ।

(ल) परिसर्पमाह दृष्टेति । दृष्टस्य अभिलषितस्य नष्टस्य अदर्शनं गतस्य अनुसरणम् अन्वेषणं परिसर्पः कथ्यते ।

(व) उदाहरति यथेति । अत्युन्नतेति । अस्य लतामण्डपस्य पाण्डुसिकते द्वारे पुरस्तात् अग्रतः अत्युन्नता, पश्चात् जघनगौरवात् जघनस्य भारवत्त्वात् अवगाढ़ा अवनता अभिनवा पदपङ्क्तिः पदन्यासपद्धतिः दृश्यते । अत्र अभिलषितान्वेषणम् ।

(श) विधूतमाह कृतस्येति । आदौ अग्रतः कृतस्य अनुनयस्य अपरिग्रहः अवधीरणं विधूतम् ।

(ष) उदाहरति यथेति । अन्तःपुरस्य अन्तःपुरवर्त्तिनः महिलाजनस्य विरहेण पर्य्युत्सुकः उत्कण्ठितः तेन राजर्षिणा वः युष्माकम् उपरुद्धेन अनुनीतेन अलम् अनुनयो न कर्त्तव्य इत्यर्थः । अरतिः असन्तोषः ।

उपायादर्शनं यत्तु
तापनं नाम तद्भवेत् ॥ ३५५ ॥ [ स ]

यथा रत्नावल्यां सागरिका ।
"दुल्लहजणाणुराओ लज्जा गुरुई परवसो अप्पा ।
पियसहि ! विसमं पेम्मं मरणं सरणं णवरि एक्कं" । ( ह )

परिहासवचो नर्म ॥ ३५६ ॥ [ च ]

यथा रत्नावल्याम् । "सुसङ्गता । सहि ! जस्स किदे तुमं आअदा स अयं दे पुरदो चिट्ठदि । सागरिका साभ्यसूयम् । कस्स किदे अहं आअदा ? सुसं । अइ अण्णसंकिदे ! णं चित्तफलअस्स" ( ८ ) । ( क )

धृतिस्तु परिहासजा ।
नर्मद्युतिः ॥ ३५७ ॥ [ ख ]

---

( ८ ) सहीति । सखि ! यस्य कृते त्वमागता सोऽयं ते पुरतस्तिष्ठति इति सं० । कस्य कृतेऽहमागता ? इति सं० । अयि अन्यशङ्किते ! ननु चित्रफलकस्य इति सं० ।

---

( स ) तापनमाह उपायेति । यत्तु उपायस्य अदर्शनं तत् नाम तापनं भवेत् ।

( ह ) उदाहरति यथेति । दुर्लभेति । दुर्लभजनानुरागो लज्जागुर्वी परवश आत्मा । प्रियसखि ! विषमं प्रेम मरणं शरणं केवलमेकम् ।—दुर्लभे दुष्प्राप्ये जने अनुरागः, लज्जा गुर्वी महती, आत्मा परवशः पराधीनः । हे प्रियसखि ! प्रेम विषमम् उत्कटं तस्मात् णवरि केवलं मरणं शरणम् आश्रयः । णवरिशब्दः केवलार्थे देशीति । अत्र इष्टलाभे उपायाभावेन सन्तापः ।

( च ) नर्माह परिहासेति । परिहासवचः परिहासवाक्यं नर्म ।

( क ) उदाहरति यथेति । स्पष्टम् ।

( ख ) नर्मद्युतिमाह धृतिरिति । परिहासजा परिहासेन जाता धृतिः धैर्यन्तु नर्मद्युतिः ।

यथा तत्रैव। सुसङ्गता। "सहि! अदक्खिणा दाणिंसि तुमं जा एवं भट्टिणा हत्थावलम्बिदावि कोवं ण मुञ्चसि"(१०)। सागः। सभ्रूभङ्गमीषद्विहस्य। "सुसङ्गदे! दाणिं वि कीलिदुं ण विरमसि" (११)। केचित्तु "दोषस्याच्छादनं हास्यं नर्मद्युतिः" इति वदन्ति (ग)।

प्रगमनं वाक्यं स्यादुत्तरोत्तरम्॥ ३५८॥ [घ]

यथा विक्रमोर्वश्याम्। उर्वशी। "जअदु जअदु महाराओ" (१२)।

राजा। "मया नाम जितं यस्य त्वया जय उदीर्य्यते" इत्यादि (ङ)।

विरोधो व्यसनप्राप्तिः॥ ३५९॥ [च]

यथा चण्डकौशिके। राजा। "नूनमसमीक्ष्यकारिणा मया अन्धेनेव स्फुरच्छिखाकलापो ज्वलनः पद्भ्यां समाक्रान्तः" (छ)।

---

(१०) सहीति। सखि! अदक्षिणा इदानीमसि त्वं या एवं भर्त्रा हस्तावलम्बितापि कोपं न मुञ्चसीति सं०।

(११) सुसङ्गते! इदानीमपि क्रीड़ितुं न विरमसीति सं०।

(१२) जअदु इति। जयति जयति महाराज इति सं०।

---

(ग) उदाहरति यथेति। स्पष्टम्।

(घ) प्रगमनमाह प्रगमनमिति। उत्तरोत्तरम् उत्कृष्टतरं वाक्यं प्रगमनं स्यात्।

(ङ) उदाहरति यथेति। मयेति। यस्य मम त्वया जयः उदीर्य्यते कीर्त्त्यते तेन मया जितं नाम जितमेव। नामशब्दोऽत्र अवधारणार्थः।

(च) विरोधमाह विरोध इति। व्यसनस्य विपदः प्राप्तिः विरोधः।

(छ) उदाहरति यथेति। असमीक्ष्यकारिणा अविवेचकेन मया अन्धेनेव

कृतस्यानुनयः पुनः।

स्यात्पर्य्युपासनं          ॥ ३६० ॥ [ ज ]

यथा रत्नावल्याम्। विदू। "भो! मा कुप्प, एसा हि कदलीघरंतरं गदा" (१३) इत्यादि ( झ )।

पुष्पं विशेषवचनं मतम् ॥ ३६१ ॥ [ ञ ]

यथा तत्रैव। राजा। "हस्ते गृहीत्वा स्पर्शं नाटयति"। विदू। "भो वअस्स! एसा अवरुव्वा सिरी तए समासादिदा" (१४)। राजा। "वयस्य! सत्यम्"।

"श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः।
कुतोऽन्यथा पतत्येष स्वेदच्छद्मामृतद्रवः" ॥ (ट)

---

(१३) भो! मा कुप्येति। भो! मा कुप्य, एषा हि कदलीगृहान्तरं गतेति सं०।

(१४) भो वयस्येति। भो वयस्य! एषा अपूर्वा श्रीस्त्वया समासादितेति सं०।

---

दृष्टिक्षीणेनेव स्फुरन् विराजन् शिखाकलापः अर्चिःसमूहो यस्य तथाभूतः ज्वलनः अग्निः पक्षां समाक्रान्तः दर्शितः। अत्राग्निकल्पस्य कौशिकस्य कोपात् राज्ञः विपत्प्राप्तिः।

( ज ) पर्य्युपासनमाह कृतस्येति। कृतस्य पुनः अनुनयः पर्य्युपासनं स्यात्।

( झ ) उदाहरति यथा रत्नावल्यामिति। स्पष्टम्।

( ञ ) पुष्पमाह पुष्पमिति। विशेषस्य प्रकर्षस्य वचनं पुष्पं मतम्।

( ट ) उदाहरति यथेति। श्रीरिति। एषा श्रीः लक्ष्मीः, अस्याः पाणिरपि पारिजातस्य देवतरुविशेषस्य पल्लवः, अन्यथा कुतः कथम् एषः स्वेदच्छद्मा घर्मव्याजः अमृतद्रवः पतति निःसरति। अत्र प्रकर्षवचनम्।

प्रत्यक्षनिष्ठुरं वज्रम् ॥ ३६२ ॥ [ ठ ]

यथा तत्रैव। राजा। "कथमिह सोऽहं त्वया ज्ञातः"। सुसं। "ण केवलं तुमं समं चित्तफलएण ता जाव गदुत्र देवीए णिवेदइस्सं" (१५)। (ड)

उपन्यासः प्रसादनम् ॥ ३६३ ॥ [ ढ ]

यथा तत्रैव। सुसं। भट्टुण अलं सङ्काए मएवि भट्टिणीए पसादेण कीलिदं ज्जेव्व एदिहिं ता किं कस्साभरणेण। अदोवि मे गरुअरो पसादो एसो जं तए अहं एत्थ आलिहिदत्ति कुविदा मे पिअसही सागरिका एसा ज्जेव पसादीअदु (१६)।

केचित्तु।

"उपपत्तिकृतो योऽर्थ उपन्यासः स कीर्त्तितः"।

इति वदन्ति उदाहरन्ति च तत्रैव। "अदिमुहरा क्खु सा गब्भदासी" इति ( ण )।

---

( १५ ) न केवलं तुमं इति। न केवलं त्वं समं चित्रफलकेन तद्यावद्गत्वा देव्यै निवेदयिष्यामीति सं०।

( १६ ) भट्टुण इति। भर्तुरलं शङ्कया मयापि भर्त्र्याः प्रसादेन क्रीड़ितमेव एतैः तत् किं कर्णाभरणेन। अतोऽपि मे गुरुतर एव प्रसाद एष यत् तया अहम् अत्र आलिखितेति कुपिता मे प्रियसखी सागरिका एषैव प्रसाद्यतामिति सं०।

---

( ठ ) वज्रमाह प्रत्यक्षेति। प्रत्यक्षं साक्षात् निष्ठुरं परुषवचनं वज्रम्।

( ड ) उदाहरति यथेति। स्पष्टम्।

( ढ ) उपन्यासमाह उपन्यास इति। प्रसादनं प्रसन्नतासम्पादनम् उपन्यासः।

( ण ) उदाहरति यथेति। स्पष्टम्। उपपत्तिः युक्तिः तया कृतः अर्थः

चातुर्वर्ण्योपगमनं
वर्णसंहार इष्यते ॥ ३६४ ॥ [ त ]

यथा, वीरचरिते तृतीयेऽङ्के।

"परिषदियमृषीणामेष वीरो युधाजित्
सममृषिभिरमात्यैर्लोमपादश्च वृद्धः।
अयमविरतयज्ञो ब्रह्मवादी पुराणः
प्रभुरपि जनकानामङ्ग! भो! याचकास्ते" ॥ (थ)

इत्यत्र ऋषिप्रभृतीनां वर्णानां मेलनम्। अभिनवगुप्तपादास्तु वर्णशब्देन पात्राण्युपलक्ष्यन्ते। "संहारो मेलनम्" इति व्याचक्षते। उदाहरन्ति च रत्नावल्यां द्वितीयेऽङ्के।

"अदोवि मे अअं गरुओ पसादो" इत्यादेरारभ्य "णं हत्थे गेह्णिअ पसादेहि णं" (द)। राजा। "कासौ कासौ" इत्यादि।

---

वस्तु। अदीति। अतिमुखरा खलु एषा गर्भदासीति संस्कृतम्। दासी गर्भजाता दासी गर्भदासी।

(त) वर्णसंहारमाह चातुर्वर्ण्येति। चतुर्णां वर्णानां ब्राह्मणक्षत्रियवैश्यशूद्राणां समाहारः चातुर्वर्ण्यं तस्य उपगमनं मेलनं वर्णसंहार इष्यते।

(थ) उदाहरति परिषदिति। अङ्ग! भो जामदग्न्य! इयम् ऋषीणां परिषत् समूहः, एष वीरो युधाजित्, अयञ्च ऋषिभिरमात्यैश्च समं वृद्धो लोमपादः, अयम् अविरतयज्ञः सततयज्ञानुष्ठायी पुराणः प्राचीनः ब्रह्मवादी वेदनिरतः जनकानां प्रभुः मिथिलाधिपतिरित्यर्थः ते तव याचकाः, एते सर्वे समवेता इति शेषः।

(द) अदोवि इति। अतोऽपि मे अयं गुरुतरः प्रसाद इति, ननु हस्ते गृहीत्वा प्रसादय एनामिति च संस्कृतम्। अत्र राजविदूषकसागरिकासुसङ्गतारूपाणां पात्राणां मेलनम्।

अथ गर्भाङ्गानि।

अभूताहरणं मार्गो रूपोदाहरणे क्रमः।
सङ्ग्रहश्चानुमानञ्च प्रार्थनाक्षिप्तिरेव च॥
तोटकाधिबलोद्वेगा गर्भे स्युर्विद्रवस्तथा।
अत्र व्याजाश्रयं वाक्यमभूताहरणं मतम्॥ [ध]

यथा अश्वत्थामाङ्के।

"अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा।
स्वैरं शेषे गज इति किल व्याहृतं सत्यवाचा"॥ (न)

तत्त्वार्थकथनं मार्गः ॥ ३६६ ॥ [प]

यथा चण्डकौशिके राजा। भगवन्!

"गृह्यतामर्जितमिदं भार्य्यातनयविक्रयात्।
शेषस्यार्थे करिष्यामि चाण्डालेऽप्यात्मविक्रयम्"॥ (फ)

---

(ध) गर्भसन्ध्यङ्गान्याह अथेति। अभूताहरणमिति। अभूताहरणादीनि त्रयोदश गर्भसन्धेरङ्गानीत्यर्थः। तत्र तेषु मध्ये व्याजाश्रयं कपटाश्रयं वाक्यम् अभूतस्य असत्यस्य आहरणमित्यभूताहरणं मतं कथितम्।

(न) उदाहरति यथेति। अश्वत्थामेति। अश्वत्थामा हतः विनाशित इति पृथा कुन्ती तस्याः सूनुः सुतः तेन युधिष्ठिरेणेत्यर्थः सत्यवाचा सत्यवादिना सता स्पष्टं सुव्यक्तम् उक्त्वा शेषे स्वैरं मन्दं यथा तथा गज इति व्याहृतम् उक्तं किल। अत्र पार्थवाक्यं कपटमयम्।

(प) मार्गमाह तत्त्वेति। तत्त्वार्थस्य यथार्थस्य कथनं मार्गः।

(फ) उदाहरति यथेति। गृह्यतामिति भार्य्या च तनयश्च तयोर्विक्रयात् अर्जितं लब्धम् इदं धनं गृह्यतां, शेषस्य अवशिष्टस्य देयस्य इत्यर्थः अर्थे निमित्तं चाण्डालेऽपि आत्मविक्रयं करिष्यामि। अत्र राज्ञः सत्यभाषणम्।

रूपं वाक्यं वितर्कवत् ॥ ३६७ ॥ [ व ]

यथा रत्नावल्यां राजा ।

"मनः प्रकृत्यैव चलं दुर्लक्ष्यञ्च तथापि मे ।
कामेनैतत्कथं विद्धं समं सर्वैः शिलीमुखैः" ॥ (श)

उदाहरणमुत्कर्षयुक्तं वचनमुच्यते ॥३६८॥ [ स ]

यथा अश्वत्थामाङ्के ।

"यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुमदात् पाण्डवीनाञ्चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम्" (य)

भावतत्त्वोपलब्धिस्तु क्रमः स्यात् ॥ ३६९ ॥ [ र ]

---

( व ) रूपमाह रूपमिति । वितर्कवत् वाक्यं रूपम् ।

( श ) उदाहरति यथेति । मन इति । मनः चित्तं प्रकृत्यैव स्वभावेनैव चलं दुर्लक्ष्यञ्च लक्षयितुं शरव्यीकर्त्तुमशक्यञ्च, तथापि कामेन मे मनः एतत् मम युगपत् समं सर्वैः शिलीमुखैः शरैः कथं विद्धम् ? अत्र राज्ञः सवितर्कं वचनम् ।

( स ) उदाहरणमाह उदाहरणमिति । उत्कर्षयुक्तं वचनं काव्यम् उदाहरणम् उच्यते कथ्यते ।

( य ) उदाहरति यथेति । य इति । अश्वत्थाम्न उक्तिरियम् । पाण्डवीनां चमूनां सेनानां मध्ये यः यः स्वभुजगुरुमदात् निजबाहुबलस्यातिदर्पादित्यर्थः शस्त्रं बिभर्त्ति पाञ्चालगोत्रे द्रुपदवंशे यः यः शिशुः अधिकवयाः प्रवयाः वा गर्भशय्यां जरायुं गतः, यः यः तस्य कर्मणः पितृनिधनरूपस्य साक्षी साक्षात् द्रष्टा, यश्च यश्च मयि रणे चरति सति प्रतीपः प्रतिकूलो भविष्यतीत्यर्थः, अहं क्रोधान्धः सन् स्वयं जगताम् अन्तकस्य यमस्यापि तस्य तस्य इह रणभूमौ अन्तकः विनाशकः भविष्यामीति शेषः । स्रग्धरावृत्तं, म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति तल्लक्षणात् ।

( र ) क्रममाह भावेति । भावस्य निर्विकारचित्तस्य प्रथमविकृतिरूपस्य

यथा शाकुन्तले राजा। "स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि। तथाहि।

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः।
पुलकाचितेन कथयति मय्यनुरागं कपोलेन" ॥ (ल)

संग्रहः पुनः ।

सामदानार्थसम्पन्नः ॥ ३७० ॥ [व]

यथा रत्नावल्यां राजा। साधु वयस्य! इदन्ते पारितोषिकमिति कटकं ददाति (श)।

लिङ्गादूहोऽनुमानता ॥ ३७१ ॥ [ष]

यथा जानकीराघवे नाटके रामः।

"लीलागतैरपि तरङ्गयतो धरित्रीम्
आलोकनैर्नमयतो जगतां शिरांसि।

---

निर्विकारात्मके चित्ते भावः प्रथमविक्रियेति तल्लक्षणात्। तस्योपलब्धिः याथार्थ्यानुभवः क्रमः स्यात्।

(ल) उदाहरति यथेति। उन्नमितैकभ्रूलतमिति। उन्नमिता उत्क्षिप्ता एका भ्रूलता यत्र तादृशं, पदानि सुप्तिङन्तरूपाणि रचयन्त्याः अस्याः शकुन्तलायाः आननं मुखं पुलकाञ्चितेन लोमाञ्चितेन कपोलेन मयि अनुरागं कथयतीव। अत्र शकुन्तलायाः प्रथमविकृतिरनुभवः।

(व) संग्रहमाह संग्रहेति। साम्ना प्रियवाक्येन दानेन च अर्थस्य सम्पत्तिः सत्साधनमित्यर्थः संग्रहः।

(श) उदाहरति यथेति। स्पष्टम्। अत्र प्रियवचनदानाभ्यां प्रियासङ्घटनरूपस्य अर्थस्य समाधानम्।

(ष) अनुमानमाह लिङ्गादिति। लिङ्गात् पक्षसत्त्वसपक्षसत्त्वविपक्षव्यावृत्तत्वविशिष्टात् साधनात् ऊहः साध्यज्ञानमित्यर्थः अनुमानता अनुमानमित्यर्थः। स्वार्थे तप्रत्ययः।

(स) उदाहरति यथेति। लीलागतैः सविलासगमनैः धरित्रीं पृथिवीं

लक्ष्मानुमापयति काञ्चनकान्तिगौर-
कायस्य सूर्य्यतनयत्वमधृष्यताञ्च" ॥ (स)

**रतिहर्षोत्सवानान्तु**
**प्रार्थनं प्रार्थना भवेत् ॥ ३७२ ॥ [ह]**

यथा रत्नावल्याम्। "प्रिये सागरिके !
शीतांशुर्मुखमुत्पले तव दृशौ पद्मानुकारौ करौ
रम्भास्तम्भनिभं तथोरुयुगलं बाहू मृणालोपमौ।
इत्याह्लादकराखिलाङ्गि ! रभसान्निःशङ्कमालिङ्ग्य मा-
मङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय" ॥ (च)

इदञ्च प्रार्थनाख्यमङ्गम्। यन्मते निर्वहणे इह भूतावसरत्वात् (क) प्रशस्तिनामाङ्गं नास्ति तन्मतानुसारेणोक्तम् अन्यथाङ्गानां पञ्चषष्टिसङ्ख्यत्वप्रसङ्गात्।

---

तरङ्गयतः कम्पयतः, आलोकनैः दृष्टिभिः जगतां शिरांसि नमयतः नतानि कुर्वतः, काञ्चनस्य स्वर्णस्य या कान्तिः तद्वत् गौरः कायो यस्य तादृशस्य तस्य लक्ष्मणस्य सूर्य्यतनयत्वं सूर्य्यवंशीयत्वम् अधृष्यतां दुरासदत्वञ्च अनुमापयति अनुमानविषयीकरोति। लीलागतमालोकनञ्चेति कर्तृपदमध्याहार्य्यम्। वसन्ततिलकं वृत्तम्। अत्र लीलागमनादिप्रयुक्तधरित्रीकम्पनादिरूपात् साधनात् साध्यस्य सूर्य्यतनयत्वस्य अधृष्यत्वस्य च अनुमानम्।

(ह) प्रार्थनामाह रतीति। रतेः अनुरागात् हर्षाच्च उत्सवानां प्रार्थनं याच्ञा प्रार्थना भवेत्।

(च) उदाहरति यथेति। शीतांशुरिति। तव मुखं शीतांशुः चन्द्रः, दृशौ नेत्रे उत्पले नीलोत्पले इत्यर्थः, करौ हस्तौ पद्मानुकारौ पद्मोपमौ, ऊरुयुगलं रम्भास्तम्भनिभं रम्भागर्भसदृशं तथा बाहू मृणालोपमौ। इत्थम् आह्लादकराणि आनन्ददातॄणि अखिलानि सर्वाणि अङ्गानि यस्यास्तत्सम्बुद्धौ। त्वं रभसात् वेगात् हर्षाद्वा, रभसो वेगहर्षयोरित्यमरः। निःशङ्कं यथा तथा मामालिङ्ग्य अनङ्गतापविधुराणि मदनसन्तापविक्लवानि मम अङ्गानि निर्वापय शीतलय एहि आगच्छ। शार्दूलविक्रीडितं वृत्तम्।

(क) निर्वहणे निर्वहणाख्ये सन्धौ भूतावसरत्वात् प्राप्तविषयत्वात्।

**रहस्यार्थस्य तूद्भेदः क्षिप्तिः स्यात् ॥२७३॥ [ख]**

यथा अश्वत्थामाङ्के ।

"एकस्यैव विपाकोऽयं दारुणो भुवि वर्त्तते ।
केशग्रहे द्वितीयेऽस्मिन् नूनं निःशेषिताः प्रजाः" ॥ (ग)

**त्रोटकं पुनः ।**

**संरब्धवाक् ॥२७४॥ [घ]**

यथा चण्डकौशिके । कौशिकः । "आः ! पुनः कथमद्यापि न सम्भृताः ( ङ ) स्वर्णदक्षिणाः" ।

**अधिबलमभिसन्धिश्छलेन यः ॥ २७५ ॥ [च]**

यथा रत्नावल्यां काञ्चनमाला । "भट्टिणि ! इअं सा चित्तसालिआ वसंतअस्स सण्णं करोमि" इत्यादि ( छ ) ।

---

( ख ) क्षिप्तिमाह रहस्येति । रहस्यस्य गुप्तस्य अर्थस्य उद्भेदः प्रकटनं क्षिप्तिः स्यात् ।

( ग ) उदाहरति यथेति । एकस्यैवेति । भुवि पृथिव्याम् एकस्य द्रौपदीकेशग्रहस्य इत्यर्थः अयं दारुणो विपाकः दुष्परिणामः वर्त्तते, अस्मिन् द्वितीये केशग्रहे द्रोणकेशकर्षणे नूनं मन्ये प्रजाः निःशेषिताः भविष्यन्तीति शेषः । केशग्राहमाक्रम्य द्रोणं निहतवान् धृष्टद्युम्न इति पुराणम् ।

( घ ) त्रोटकमाह त्रोटकमिति । संरब्धा सकोपा वाक् त्रोटकम् ।

( ङ ) उदाहरति यथेति । सम्भृताः सम्प्राप्ताः । भृधातोः प्राप्त्यर्थत्वमत्र बोध्यम् ।

( च ) अधिबलमाह अधिबलमिति । छलेन कपटेन अभिसन्धिः अभिप्रायानुसरणम् अधिबलम् ।

( छ ) उदाहरति यथेति । भट्टिणीति । भर्त्रि ! इयं सा चित्रशालिका, तद् यावत् वसन्तस्य संज्ञां करोमीति संस्कृतम् । चित्रशालिका आलेख्यगृहं, संज्ञां सङ्केतम् ।

नृपादिजनिता भीति-
रुद्वेगः परिकीर्त्तितः ॥३७६॥ [ञ]

यथा वेण्याम्।

"प्राप्तावेकरथारूढौ पृच्छन्तौ त्वामितस्ततः।
स कर्णारिः स च क्रूरो वृककर्मा वृकोदरः" ॥ (झ)

शङ्काभयत्रासकृतः
सम्भ्रमो विद्रवो मतः ॥३७७॥ [ञ]

यथा।

"कालान्तककरालास्यं क्रोधोद्धूतं दशाननम्।
विलोक्य वानरानीके सम्भ्रमः कोऽप्यजायत" ॥ (ट)

---

(ञ) उद्वेगमाह नृपादीति। नृपादेः सकाशात् जनिता उत्पादिता भीतिः भयम् उद्वेगः परिकीर्त्तितः।

(झ) उदाहरति यथेति। दुर्य्योधनं प्रति तदीयपुरुषस्य उक्तिरियम्। स कर्णारिः कर्णशत्रुः अर्जुनः स च क्रूरः निष्ठुरः वृककर्मा वृको व्याघ्रविशेषः तद्वद् कर्म यस्य तादृशः दुःशासनोरःस्थलात् रुधिरपानेनेति भावः वृकोदरः भीमः एकम् अद्वितीयं रथमारूढौ इतस्ततः त्वां पृच्छन्तौ प्राप्तौ आगतौ। अत्र भीमार्जुनाभ्यां भीतिः।

(ञ) विद्रवमाह शङ्केति। शङ्कया अनिष्टाशंसया भयेन त्रासेन तदनुकूलव्यापारेण च सम्भ्रमः आवेगः विद्रवः मतः कथितः।

(ट) उदाहरति यथेति। कालान्तकः प्रलयकालीनो यमः तद्वत् करालानि भीषणानि आस्यानि मुखानि यस्य तादृशं क्रोधोद्धूतं कोपदृप्तं दशाननं रावणं विलोक्य वानराणाम् अनीके सैन्ये कोऽपि अनिर्वचनीय इत्यर्थः सम्भ्रमः आवेगः अजायत अभूत्।

(ठ) विप्रलम्भमाह अथेति। अपवादादीनि वर्णयन् विप्रलम्भस्य दशैः दशाः।

अथ विमर्षाङ्गानि।

अपवादोऽथ सम्फेटो व्यवसायो द्रवो द्युतिः।
शक्तिः प्रसङ्गः खेदश्च प्रतिषेधो विरोधनम्॥
प्ररोचना विमर्षे स्यादादानं छादनं तथा। [ठ]
दोषप्रख्याऽपवादः स्यात् ॥३७८॥ [ड]

यथा वेण्यां "युधिष्ठिरः। पाञ्चालक! कच्चिदासादिता तस्य दुरात्मनः पदवी। पाञ्चालकः। न केवलं पदवी स एव दुरात्मा देवीकेशपाशस्पर्शपातकप्रधानहेतुरुपलब्धः"।

सम्फेटो रोषभाषणम् ॥३७९॥ [ण]

यथा तत्रैव राजा। अरेरे मरुत्तनय! वृद्धस्य राज्ञः पुरतो निन्दितमप्यात्मकर्म श्लाघसे? (त) शृणु रे!

"कृष्टा केशेषु भार्य्या तव तव च पशोस्तस्य राज्ञस्तयोर्वा
प्रत्यक्षं भूपतीनां मम भुवनपतेराज्ञया द्यूतदासी।

---

(ड) अपवादमाह दोषेति। दोषस्य प्रख्या कथनम् अपवादः स्यात्।

(ढ) उदाहरति। यथेति। आसादिता प्राप्ता। दुरात्मनः दुर्य्योधनस्य। देवीति। देव्याः द्रौपद्याः केशपाशस्य स्पर्शात् यत् पातकं तस्य प्रधानहेतुः मुख्यकारणं दुर्य्योधन इत्यर्थः उपलब्धः प्राप्तः। अत्र दुर्य्योधनस्य दोषकथनम्।

(ण) सम्फेटमाह सम्फेट इति। रोषेण क्रोधेन भाषणं कथनं सम्फेटः।

(त) उदाहरति। मरुत्तनय! वायुपुत्र! भीम इत्यर्थः वृद्धस्य राज्ञः धृतराष्ट्रस्य पुरतः अग्रतः श्लाघसे प्रशंससि?

(थ) कृष्टेति। भीमार्जुनौ प्रति दुर्य्योधनवचनम्। भुवनपतेः समस्तपृथिवीश्वरस्य मम आज्ञया भूपतीनां राज्ञां प्रत्यक्षं द्यूतेन निर्जिता दासी किङ्करी अतएव तव इति भीमं प्रति, पशोः पशुतुल्यस्य इत्यर्थः तव इति अर्जुनं प्रति,

तस्मिन् वैरानुबन्धे वद किमपकृतं तैर्हता ये नरेन्द्रा
बाह्वोर्वीर्य्यातिभारद्रविणगुरुमदं मामजित्वैव दर्पः” ॥ (थ)
“भीमः । सक्रोधं आः पाप! राजा । आः पाप!”

इत्यादि ।

व्यवसायश्च विज्ञेयः
प्रतिज्ञाहेतुसम्भवः ॥३८०॥ [द]

यथा तत्रैव भीमः ।

“निहताशेषकौरव्यः क्षीबो दुःशासनासृजा ।
भङ्क्ता दुर्य्योधनस्योर्वोर्भीमोऽयं शिरसा नतः” ॥ (ध)

द्रवो गुरुव्यतिक्रान्तिः
शोकावेगादिसम्भवा ॥ ३८१ ॥ [न]

---

तस्य राज्ञः युधिष्ठिरस्य तयोः नकुलसहदेवयोर्वा, वाशब्दोऽत्र समुच्चयार्थः । वा स्यात् विकल्पोपमयोरेवार्थेऽपि समुच्चये इत्यमरः । भार्य्या द्रौपदी केशेषु कृष्टा दुःशासनेनेति शेषः । तस्मिन् वैरस्य विद्वेषस्य अनुबन्धे कारणे जाते सतीति शेषः ये नरेन्द्राः राजानः हता युष्माभिरिति शेषः तैः किम् अपकृतम् ? वद बाह्वोर्भुजयोः वीर्य्यातिशयादिति भावः । अतिवीर्य्यम् एव द्रविणं धनं तेन गुरुर्महान् मदो गर्वो यस्य तादृशं माम् अजित्वैव दर्पः अहङ्कारः क्रियते युष्माभिरिति शेषः । स्रग्धरावृत्तम् । अत्र क्रोधेन भीमदुर्य्योधनयोर्भाषणम् ।

(द) व्यवसायमाह व्यवसाय इति । प्रतिज्ञायाः कार्य्यनिर्देशस्य हेतोः साधननिर्देशस्य च सम्भवः सम्मेलनं व्यवसायः विज्ञेयः ।

(ध) उदाहरति यथेति । पूर्णप्रतिज्ञस्य भीमस्य धृतराष्ट्रं प्रति प्रणतिवचनम् । निहताः अशेषाः कौरव्याः कुरुवंशीयाः येन तादृशः, दुःशासनस्य असृजा रक्तेन रक्तपानेनेत्यर्थः क्षीबः मत्तः तथा दुर्य्योधनस्य ऊर्वोरुद्वयस्य भङ्क्ता भङ्गकारी अयं भीमः शिरसा नतः । अत्र कार्य्यस्य कौरवहननादिकस्य क्षीबत्वहेतोश्च दुःशासनरुधिरपानस्य सम्मेलनम् ।

(न) द्रवमाह द्रव इति । शोकावेगादिना सम्भूता गुरूणां व्यतिक्रान्तिः व्यतिक्रमः अनादरप्रदर्शनमित्यर्थः द्रवः ।

यथा तत्रैव । "युधिष्ठिरः । भगवन् ! कृष्णाग्रज ! सुभद्रा-भ्रातः !

ज्ञातिप्रीतिर्मनसि न कृता क्षत्रियाणां न धर्मो
रूढं सख्यं तदपि गणितं नानुजस्यार्जुनेन ।
तुल्यः कामं भवतु भवतः शिष्ययोः स्नेहबन्धः
कोऽयं पन्था यदसि विमुखो मन्दभाग्ये मयि त्वम्" ॥ (प)

**तर्जनोद्वेजने प्रोक्ता द्युतिः ॥३८२॥ [फ]**

यथा तत्रैव दुर्य्योधनं प्रति कुमारवृकोदरेणोक्तम् ।

"जन्मेन्दोर्विमले कुले व्यपदिशस्यद्यापि धत्से गदां
मां दुःशासनकोष्णशोणितमधुक्षीवं रिपुं मन्यसे ।
दर्पान्धो मधुकैटभद्विषि हरावप्युद्धतं चेष्टसे
त्रासान्मे नृपशो ! विहाय समरं पङ्केऽधुना लीयसे" ॥ (ब)

---

(प) उदाहरति यथेति । ज्ञातिप्रीतिः एकवंशजत्वनिबन्धनः प्रणय इत्यर्थः युधिष्ठिरबलदेवयोरेकचन्द्रवंशप्रभवत्वादिति भावः । मनसि न कृता न गणिता इत्यर्थः, क्षत्रियाणां धर्मः संग्रामे पन्धुमित्रसमदर्शित्वरूप इति भावः न गणितः, अर्जुनेन अनुजस्य कृष्णस्य रूढं बद्धं सख्यं यत् तदपि न गणितं, भवतेति सर्वत्राध्याहार्य्यम् । भवतः तव शिष्ययोः भीमदुर्य्योधनयोः स्नेहबन्धः कामं सम्यक् तुल्यः समानो भवतु, अयं कः पन्थाः नयः यत् मन्दभाग्ये भाग्यहीने मयि त्वं विमुखः प्रतिकूलः असि भवसि । शिखरिणीवृत्तम् । अत्र बलदेवं प्रति अनादरसूचकवचनात् गुरुव्यतिक्रमः ।

(फ) द्युतिमाह तर्जनेति । तर्जनं भर्त्सनम् उद्वेजनं भयप्रदर्शनेन उद्वेगजननञ्च द्युतिः प्रोक्ता कथिता ।

(ब) उदाहरति यथेति । इन्दोश्चन्द्रस्य विमले निर्मले निर्दोषे इत्यर्थः कुले जन्म व्यपदिशसि कथयसि, अद्यापि गदां धत्से धारयसि, मां दुःशासनस्य कोष्णेन ईषदुष्णेन शोणितमेव मधु तेन तत्पानेनेत्यर्थः क्षीवः मत्तः तं रिपुं शत्रुम् मन्यसे गणयसि, तथा दर्पान्धः सन् मधुकैटभद्विषि मधुदैत्यकैटभदैत्य-

शक्तिः पुनर्भवेत्।

विरोधस्य प्रशमनम् ॥ ३८३ ॥ [भ]

यथा तत्रैव।

"कुर्वन्त्वाप्ताहतानां रणशिरसि जना भस्मसाद्देहभारान्
अश्रून्मिश्रं कथञ्चिद्ददतु जलममी बान्धवा बान्धवेभ्यः।
मार्गन्तां ज्ञातिदेहान् हतनरगहने खण्डितान् गृध्रकङ्कैः
अस्तं भास्वान् प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि" (म)

प्रसङ्गो गुरुकीर्त्तनम् ॥३८४॥ [य]

यथा मृच्छकटिकायां चाण्डालकः। "एसो सागलदत्तस्स सुदो अज्जविस्सदत्तस्स णत्तिओ चालुदत्तो व्याबादितुं वज्झ-

---

ध्वंसिनि हरौ कृष्णे अपि उद्धतं यथा तथा चेष्टसे, तस्य बन्धने शतोदयोगत्वादिति भावः। हे नृपशो! द्विपदपशो! त्वं मम त्रासात् भयात् अधुना समरं संग्रामं विहाय त्यक्त्वा पङ्के धोयसे लीनः सन् तिष्ठसि। शार्दूलविक्रीड़ितं वृत्तम्। अत्र तर्जनरूपा द्युतिः।

(भ) शक्तिमाह शक्तिरिति। विरोधस्य विद्वेषस्य प्रशमनं शक्तिः भवेत्।

(म) उदाहरति यथेति। जनाः रणशिरसि आप्तैः स्वजनैः हतानां देहभारान् शरीरचयान् भस्मसात् कुर्वन्तु, अमी बान्धवाः बान्धवेभ्यः रणहतेभ्य इति शेषः अश्रून्मिश्रं नेत्रजलसंवलितं जलं कथञ्चित् ददतु, तथा हतनरगहने हतैः नरैः गहने निविड़े अस्मिन् क्षेत्रे गृध्रैः कङ्कैः पक्षिविशेषैश्च खण्डितान् ज्ञातिदेहान् बान्धवशरीराणि मार्गन्ताम् अन्विष्यन्ताम्। अयं भास्वान् सूर्यः रिपुभिः शत्रुभिः सह अस्तं चरमाचलं प्रयातः चलितः, वर्त्तमाने क्तप्रत्ययः। बलानि सैन्यानि संह्रियन्तां निवर्त्त्यन्ताम्। स्रग्धरावृत्तम्। अत्र शत्रूणां निधनेन विरोधशान्तिरिति ध्येयम्।

(य) प्रसङ्गमाह प्रसङ्ग इति। गुरु अत्यर्थं कीर्त्तनं दोषादिख्यापनं वा गुरूणां कीर्त्तनं प्रसङ्गः।

ट्ठाणं णिज्जइ एदेण किल गणिआ वसंतसेणा सुवण्णलोहेण वावादिदत्ति" (१७) चारुदत्तः

"मखशतपरिपूतं गोत्रमुद्भासितं यत्
सदसि निविड़चैत्यब्रह्मघोषैः पुरस्तात्।
मम निधनदशायां वर्त्तमानस्य पापै-
स्तदसदृशमनुष्यैर्घुष्यते घोषणायाम्" ॥ (र)

इत्यनेन चारुदत्तवधाभ्युदयानुकूलप्रसङ्गाद् गुरुकीर्त्तनमिति प्रसङ्गः।

**मनश्चेष्टासमुत्पन्नः**
**श्रमः खेद इति स्मृतः ॥१८५॥ [ल]**

मनःसमुत्पन्नो यथा मालतीमाधवे।

"दलति हृदयं गाढ़ोद्वेगं द्विधा न तु भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम्।

---

(१७) एष सागरदत्तस्य सुत आर्य्यविश्वदत्तस्य नप्ता चारुदत्तो व्यापादयितुं वध्यस्थानं नीयते। एतेन किल गणिका वसन्तसेना सुवर्णलोभेन व्यापादितेति सं०।

---

(र) उदाहरति यथेति। मखेति। मखानां यज्ञानां शतैः शतशोऽनुष्ठानैरित्यर्थः परिपूतं विशुद्धं यत् गोत्रं मदीयं कुलं पुरस्तात् पूर्वं सदसि सभायां निविड़ैः सान्द्रैः अनवरतैरित्यर्थः चैत्यैः देवभावेन पूज्यैरश्वत्थवटादिभिः ग्रामनगरस्थैः उद्भासितं शोभितं, निधनदशायां मृत्युदशायां वर्त्तमानस्य मम तत् गोत्रं कुलम् असदृशाः अतिक्षुद्राः इत्यर्थः ये मनुष्याः तैः घोषणायां घुष्यते विख्याप्यते। मालिनीवृत्तम्।

(ल) खेदमाह मन इति। मनसा चेष्टया वा समुत्पन्नः जातः श्रमः खेद इति स्मृतः।

ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम्” ॥ (व)

एवं चेष्टासमुत्पन्नोऽपि।

ईप्सितार्थप्रतीघातः
प्रतिषेध इतीर्य्यते ॥ २८६ ॥ [श]

यथा मम प्रभावत्यां विदूषकं प्रति प्रद्युम्नः। “सखे! कथमिह त्वमेकाकी वर्त्तसे? क्व नु पुनः प्रियसखीजनानुगम्यमाना प्रियतमा मे प्रभावती? विदू। असुरवइणा आआरिअ कहिं वि णीदा (१८)। प्रद्युम्नः दीर्घं निःश्वस्य (ष)

“हा पूर्णचन्द्रमुखि! मत्तचकोरनेत्रे!
मामानताङ्गि! परिहाय कुतो गतासि?।
गच्छ त्वमद्य ननु जीवित! तूर्णमेव
दैवं कदर्थनपरं कृतकृत्यमस्तु” ॥ (स)

---

(१८) असुरपतिना आकार्य्य क्वापि नीतेति सं०।

---

(व) उदाहरति दलतीति। हृदयं गाढोद्वेगं गुरुपीडम् अतएव दलति स्वयं दलितं भवति न तु द्विधा भिद्यते द्विखण्डं नैव भवतीत्यर्थः, विकलः व्याकुलः कायः मोहं मूर्च्छां वहति, चेतनां न मुञ्चति न त्यजति। अन्तर्दाहः तनूं शरीरं ज्वलयति भस्मसात् न करोति, मर्मच्छेदी विधिः प्रहरति जीवितं न कृन्तति न नाशयति। हरिणीवृत्तम्।

(श) प्रतिषेधमाह ईप्सितार्थेति। ईप्सितार्थस्य अभीष्टविषयस्य प्रतीघातः प्रतिषेध इति उच्यते।

(ष) उदाहरति यथेति। आकार्य्य आहूय। हूतिराकारणाह्वान-मित्यमरः।

(स) हा इति। हा इति खेदे। पूर्णचन्द्र इव मुखं यस्यास्तत्सम्बुद्धौ, मत्तौ चकोरौ इव नेत्रे यस्यास्तत्सम्बोधने, आनतानि यौवनभरादिति भावः

**कार्य्यात्ययोपगमनं**

**विरोधनमिति स्मृतम्॥ ३८७॥ [ह]**

यथा वेख्यां युधिष्ठिरः।

"तीर्णे भीष्ममहोदधौ कथमपि द्रोणानले निर्वृते

कर्णाशीविषभोगिनि प्रशमिते शल्ये च याते दिवम्।

भीमेन प्रियसाहसेन रभसादल्पावशेषे जये

सर्वे जीवितसंशयं वयममी वाचा समारोपिताः"॥ (च)

**प्ररोचना तु विज्ञेया**

**संहारार्थप्रदर्शिनी॥ ३८८॥ [क]**

---

अङ्गानि यस्यास्तत्सम्बुद्धौ, मां परिहाय त्वञ्च कुतः गतासि? ननु जीवित! त्वम् अद्य तूर्णं शीघ्रं गच्छ, कदर्थनपरं क्लेशदानतत्परं दैवं कृतकृत्यं कृतार्थम् अस्तु भवतु। वसन्ततिलकं वृत्तम्। अत्र ईप्सितस्य प्रतीघातः।

(ह) विरोधनमाह कार्य्येति। कार्य्यस्य अत्ययः ध्वंसः तस्य उपगमनं प्राप्तिः विरोधनमिति स्मृतम्।

(च) उदाहरति यथेति। भीष्म एव महोदधिः महासमुद्रः तस्मिन् तीर्णे पराक्रान्ते इति भावः, द्रोण एव अनलः तस्मिन् कथमपि निर्वृते निर्वाणतां नीते निहते इति भावः, कर्ण एव आशीविषः भोगी सविषदन्तपन्नगः तस्मिन् प्रशमिते प्रकर्षेण शान्तिं नीते हते इति भावः, शल्ये च दिवं स्वर्गं याते युद्ध-निधनादिति भावः, इत्थं जये स्वल्पावशेषे केवलं दुर्योधनवधमात्रावशिष्टे इत्यर्थः, प्रियसाहसेन अतिसाहसवता भीमेन रभसात् वेगात् वाचा अद्यैव यदि दुर्योधनं न हन्मि तदाग्निं प्रवेच्यामीत्येवंरूपेण वाक्येनेति भावः सर्वे अमी वयं जीवित-संशयं समारोपिताः। भीमस्याग्निप्रवेशे अस्माभिरपि मर्त्तव्यमिति भावः। शार्दूलविक्रीडितं वृत्तम्।

(क) प्ररोचनामाह प्ररोचनेति। संहारस्य उपसंहारस्य अर्थः विषयः तं प्रदर्शयति या सा उक्तिरिति शेषः प्ररोचना विज्ञेया।

यथा वेण्यां पाञ्चालकः। "अहं देवेन चक्रपाणिना सहित इत्युपक्रम्य कृतं सन्देहेन।

"पूर्य्यन्तां सलिलेन रत्नकलशा राज्याभिषेकाय ते
कृष्णाऽत्यन्तचिरोज्झिते तु कवरीबन्धे करोतु क्षणम्।
रामे शातकुठारभास्वरकरे क्षत्रद्रुमोच्छेदिनि
क्रोधान्धे च वृकोदरे परिपतत्याजौ कुतः संशयः?" (ख)

## काव्यसंग्रह आदानम् ॥ ३८९ ॥ [ग]

यथा वेण्याम्।

"ननु भोः समन्तपञ्चकचारिणः! (घ)
नाहं रक्षो न भूतो रिपुरुधिरजलाह्लादिताङ्गः प्रकामं
निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि।

---

(ख) उदाहरति यथेति। पूर्य्यन्तामिति। हे राजन्नित्यध्याहार्य्यं, ते तव राज्याभिषेकाय रत्नकलशाः सलिलेन पूर्य्यन्ताम्। कृष्णा द्रौपदी अत्यन्तचिरोज्झिते अतिचिरपरित्यक्ते कवरीबन्धे केशबन्धने क्षणम् उत्सवं, क्षण उद्धत उत्सव इत्यमरः। करोतु। शातेन शाणितेन कुठारेण भास्वरः दीप्यमानः करो यस्य तादृशे क्षत्रः एव द्रुमाः वृक्षाः तेषां छेदिनि रामे भार्गवे, क्रोधान्धे वृकोदरे भीमे च आजौ युद्धे परिपतति सति संशयः जये इति शेषः कुतः? न कुतोऽपीत्यर्थः। शार्दूलविक्रीडितं वृत्तम्। अत्र महावाक्यस्य उपसंहारदर्शनम्।

(ग) आदानमाह काव्येति। कार्य्याणां संग्रहः सम्यक् ग्रहणम् आदानम्।

(घ) उदाहरति यथेति। समन्तपञ्चकचारिणः समन्तात् पञ्चकं नदीनामिति शेषः यत्र तथोक्तं कुरुक्षेत्रीयप्रदेशविशेषः, यत्र कुरुपाण्डवसंग्रामः समभवत्, तत्र चारिणः योद्धृवर्गा इत्यर्थः।

(ङ) नाहमिति। भीमसेनं रिपुरुधिराक्तदेहं धावन्तं दृष्ट्वा भयात् निहतपतितसैनिकगणान्तराले गोपितकलेवरान् संग्रामवर्त्तिनः योधान् प्रति भीमसेनोक्तिरियम्। अहं रक्षः राक्षसः न, भूतः देवयोनिविशेषः न, रिपूणां रुधिरजलैः शोणितवारिभिः आह्लादितानि आप्यायितानि विराजितानीत्यर्थः अङ्गानि

भो भो राजन्यवीराः! समरशिखिशिखाभुक्तशेषाः कृतं वः
त्रासेनानेन लीनैर्हतकरितुरगान्तर्हितैरास्यते यत्" ॥ (ङ)

अत्र समस्तरिपुवधकार्य्यस्य संगृहीतत्वादादानम्।

तदाहुश्छादनं पुनः।

कार्य्यार्थमपमानादेः सहनं खलु यद्भवेत् ३९० [च]

यथा तत्रैव अर्जुनः। आर्य्य!

"अप्रियाणि करोत्येष वाचा शक्तो न कर्मणा।
हतभ्रातृशतो दुःखी प्रलापैरस्य का व्यथा" ॥ (छ)

अथ निर्वहणाङ्गानि।

सन्धिर्विबोधो ग्रथनं निर्णयः परिभाषणम्।

---

यस्य तथोक्तः, क्रोधनः प्रकामं सम्यक् यथा तथा निस्तीर्णः उत्तीर्णः उरुर्महान् प्रतिज्ञा एव जलनिधिः समुद्रः येन सः अतएव गहनः निविड़ः दुरासद इत्यर्थः क्षत्रियः अस्मि भवामि। भो भो राजन्यवीराः! क्षत्रियेषु शौर्य्यशालिनः! यूयं समरशिखिनः रणाग्नेः शिखाभिः ज्वालाभिः भुक्तेभ्यः दग्धेभ्य इत्यर्थः शेषाः अवशिष्टाः नाधुना रणाग्निर्युष्मान् धक्ष्यतीति भावः अतः वः युष्माकम् अनेन त्रासेन कृतम् अलं यत् यस्मात् त्रासादित्यर्थः करिषु हस्तिषु तुरगेषु अश्वेषु च अन्तर्हितैः अन्तर्धानं गतैः तिरोहितैरित्यर्थः अतएव लीनैः विलयं प्राप्तैरिवेति भावः आस्यते स्थीयते युष्माभिरिति शेषः।

(च) छादनमाह तदाहुरिति। कार्य्यार्थं यत् खलु अपमानादेः सहनं भवेत् तत् पुनः छादनम् आहुः।

(छ) उदाहरति यथेति। अप्रियाणीति। हतं भ्रातॄणां दुःशासनादीनां शतं यस्य तादृशः अतएव दुःखी अतिशोकार्त्त इत्यर्थः एष दुर्य्योधनः वाचा शक्तः कर्मणा न शक्तः अप्रियाणि करोतु कटुवाक्यं वदतु अपकर्त्तुं कार्य्येण किमपि न शक्नोति इति भावः, अस्य प्रलापैः अनर्थकैः वाक्यैः व्यथा वेदना का? न कापीत्यर्थः। अत्र दुर्य्योधनस्य वाक्येन अपमानस्य कार्य्यकारित्वात् छादनम्।

कृतिः प्रसाद आनन्दः समयोऽप्युपगूहनम् ॥
भाषणं पूर्ववाक्यञ्च काव्यसंहार एव च।
प्रशस्तिरिति संहारे ज्ञेयान्यङ्गानि नामतः ॥
३९१ ॥ [ज]

तत्र।

वीजोपगमनं सन्धिः ॥३९२॥ [झ]

यथा वेण्यां भीमः। "भवति यज्ञवेदिसम्भवे! स्मरति भवती यन्मयोक्तं चञ्चद्भुजेत्यादि"। अनेन मुखे क्षिप्तवीजस्य (ञ) पुनरुपगमनमिति सन्धिः।

विवोधः कार्य्यमार्गणम् ॥ ३९३ ॥ [ट]

यथा तत्रैव भीमः। "मुञ्चतु मामार्य्यः क्षणमेकम्। युधिष्ठिरः। किमपरमवशिष्टम्। भीमः। सुमहदवशिष्टम्। संयमयामि तावदनेन सुयोधनशोणितोक्षितेन पाणिना पाञ्चाल्या दुःशासनावकृष्टं केशहस्तम्। युधिष्ठिरः। गच्छतु

---

(ज) निर्वहणाङ्गान्याह सन्धीति। सन्ध्यादीनि चतुर्दश निर्वहणाख्यस्य सन्धेरङ्गानीत्यर्थः।

(झ) सन्धिमाह वीजेति। वीजस्य पूर्वोक्तस्य उपगमनम् उद्भावनं सन्धिः।

(ञ) उदाहरति यथेति। यज्ञवेदिसम्भवे! याज्ञसेनि! द्रौपदि! मुखे मुखाख्यसन्धौ क्षिप्तस्य उद्भूतस्य वीजस्य।

(ट) विवोधमाह विवोध इति। कार्य्यस्य कर्त्तव्यस्य मार्गणम् अन्वेषणं विवोधः।

भवाननुभजतु तपस्विनी (ठ) वेणीसंहारमिति"। अनेन केश-संयमनकार्य्यस्यान्वेषणाद्विबोध:।

## उपन्यासस्तु कार्य्याणां ग्रथनम् ॥ ३९४ ॥ [ड]

यथा तत्रैव भीम:। "पाञ्चालि! न खलु मयि जीवति संहर्त्तव्या दुःशासनविलुलिता (ढ) वेणिरात्मपाणिभ्यां तिष्ठ स्वयमेवाहं संहरामीति" अनेन कार्य्यस्योपक्षेपाद् ग्रथनम्।

निर्णय: पुन:।

## अनुभूतार्थकथनम् ॥३९५॥ [ण]

यथा तत्रैव भीम:। "देव! अजातशत्रो! अद्यापि दुर्य्योधनहतक:। मया हि तस्य दुरात्मन:।

"भूमौ क्षिप्तं शरीरं निहितमिदमसृक्चन्दनाभं निजाङ्गे
लक्ष्मीरार्य्ये निषिक्ता चतुरुदधिपय:सीमया सार्द्धमुर्व्या।
भृत्या मित्राणि योधा: कुरुकुलमनुजा दग्धमेतद्रणाग्नौ
नामैकं यद्ब्रवीषि क्षितिप! तदधुना धार्त्तराष्ट्रस्य शेषम्" (त)

---

(ठ) उदाहरति यथेति। केशहस्तं केशसमूहं, पाशो हस्तश्च कलापार्था: कचात् परे इत्यमर:। संयमयामि बध्नामि। तपस्विनी वराकी।

(ड) ग्रथनमाह उपन्यास इति। कार्य्याणाम् उपन्यास: कीर्त्तनं ग्रथनम्।

(ढ) उदाहरति यथेति। दुःशासनविलुलिता दुःशासनेन विपर्य्यासिता आकर्षणार्थं बन्धनात् च्याविता इत्यर्थ:।

(ण) निर्णयमाह निर्णय इति। अनुभूतस्य भुक्तस्य कृतस्य इत्यर्थ: अर्थस्य कार्य्यस्य कथनं निर्णय:।

(त) उदाहरति मया हीति। भूमौ शरीरं क्षिप्तं पातितं चन्दनाभं चन्दनवत् सुखस्पर्शमिति भाव: इदम् असृक् तस्य रुधिरं निजाङ्गे निहितम् अर्पितम्। चतुर्णाम् उदधीनां समुद्राणां पयांसि जलानि सीमानो यस्यास्तादृश्या उर्व्या पृथिव्या सार्द्धं लक्ष्मी: आर्य्ये भवतीत्यर्थ: निषिक्ता अर्पिता। भृत्या:

परिवादकृतं वाक्यं
वदन्ति परिभाषणम्॥ ३९६ ॥ [घ]

यथा शाकुन्तले। राजा। "आर्य्ये! अथ सा तत्र भवती किमाख्यस्य राजर्षेः पत्नी। तापसी। को तस्स धम्मदारपरिच्चाइणो णामं गेण्हिस्सदि (१८)। (द)

लब्धार्थागमनं कृतिः ॥ ३९७ ॥ [ध]

यथा वेण्यां कृष्णः। "एते भगवन्तो व्यासवाल्मीकिप्रभृतयोऽभिषेकं धारयन्तस्तिष्ठन्ति इति" अनेन प्राप्तराज्यस्याभिषेकमङ्गलैः स्थिरीकरणं कृतिः (न)।

शुश्रूषादिः प्रसादः स्यात् ॥ ३९८ ॥ [प]

---

(१८) कस्तस्य धर्मदारपरित्यागिनो नाम ग्रहीष्यतीति सं०।

---

मित्राणि किं बहुना कुरुकुलेषु ये मनुजाः मानवाः योधाः युद्धार्थमुपस्थिता इत्यर्थः एतत् सर्वं रणाग्नौ दग्धं भस्मीकृतं निहतमित्यर्थः। हे क्षितिप! यत् एकं नाम दुर्योधनेति शेषः ब्रवीषि कथयसि धार्त्तराष्ट्रस्य अधुना तत् तन्मात्रमेव शेषं नामशेषः कृतो धार्त्तराष्ट्र इति भावः। स्रग्धरावृत्तम्। अत्र कृतकार्य्यस्य कथनम्।

(घ) परिभाषणमाह परिवादेति। परिवादः कुत्सा तेन कृतं वाक्यं परिभाषणं वदन्ति।

(द) उदाहरति यथेति। स्पष्टम्। अत्र कुत्साजनितवाक्यकथनम्।

(ध) कृतिमाह लब्धेति। लब्धस्य प्राप्तस्य अर्थस्य विषयस्य आगमनं प्राकाश्येन स्थिरीकरणं कृतिः।

(न) उदाहरति यथेति। स्पष्टम्।

(प) प्रसादमाह शुश्रूषादिरिति। शुश्रूषादिः सेवादिः प्रसादः।

यथा तत्रैव। भीमेन द्रौपद्याः केशसंयमनम्।

**आनन्दो वाञ्छितागमः** ॥ ३९९ ॥ [फ]

यथा तत्रैव। "द्रौपदी। विसुमरिदं एदं वावारं णाधस्स पसादेण पुणोवि सिक्खिस्सं (१९)। (ब)

**समयो दुःखनिर्याणम्** ॥ ४०० ॥ [भ]

रत्नावल्यां वासवदत्ता। रत्नावलीमालिङ्ग्य। "समस्सस वहीणिए! समस्सस (२०)।

**तद्भवेदुपगूहनम्।**

**यत् स्यादद्भुतसम्प्राप्तिः** ॥ ४०१ ॥ [म]

यथा मम प्रभावत्यां नारददर्शनात् प्रद्युम्न ऊर्द्ध्वमवलोक्य।

"दधद्विद्युल्लेखामिव कुसुममालां परिमल-
भ्रमद्भृङ्गश्रेणीध्वनिभिरुपगीतां तत इतः।

---

(१९) विस्मृतमपि तदेतद् व्यापारं नाथस्य प्रसादेन पुनरपि शिक्षिष्यामीति सं०।

(२०) समाश्वसिहि भगिनि! समाश्वसिहीति सं०।

---

(फ) आनन्दमाह आनन्द इति। वाञ्छितस्य अभीष्टस्य आगमः तज्जनिता प्रीतिरिति भावः आनन्दः।

(ब) उदाहरति यथेति। एतं व्यापारं केशबन्धनकार्य्यमित्यर्थः।

(भ) समयमाह समय इति। दुःखस्य निर्याणम् अपगमः समयः।

(म) उपगूहनमाह तदिति। यत् अद्भुतस्य आश्चर्य्यस्य सम्प्राप्तिः समागमः तत् उपगूहनं भवेत्।

(य) उदाहरति। यथेति। दधदिति। परिमलेन सौरभेण भ्रमतां सञ्चरतां भृङ्गाणां याः श्रेण्यः समूहाः तासां ध्वनिभिः गुणगुणस्वनैरुपगीतां

दिगन्तं ज्योतिर्भिस्तुहिनकरगौरैर्धवलय-
न्नितः कैलासाद्रिः पतति वियतः किं पुनरिदम्" ॥ (य)

सामदानादि भाषणम् ॥ ४०२ ॥ [र]

यथा चण्डकौशिके। "धर्मः। तदेहि धर्मलोकमधितिष्ठ" (ल)

पूर्ववाक्यन्तु विज्ञेयं
यथोक्तार्थोपदर्शनम् ॥ ४०३ ॥ [व]

यथा वेण्यां भीमः। बुद्धिमतिके ! क्व सा भानुमती परिभवतु सम्प्रति पाण्डवदारान्"। (श)

वरप्रदानसम्प्राप्तिः
काव्यसंहार इष्यते ॥ ४०४ ॥ [ष]

---

भव्दितां विद्युल्लेखामिव तड़ित्पुञ्जमिव कुसुममालां दधत् धारयन् तत इतः समन्तात् तुहिनकरश्चन्द्रः तद्वत् गौरैः शुभ्रैः ज्योतिर्भिः देहप्रभाभिः दिगन्तं धवलयन् श्वेतीकुर्वन् वियतः आकाशात् इतः अस्मिन् प्रदेशे कैलासाद्रिः पतति ? इदं पुनः किम् आश्चर्य्यमेतदित्यर्थः। शिखरिणीवृत्तम्। अत्र अद्भुतप्रतिपत्तिः।

(र) भाषणमाह सामेति। साम प्रियभाषणं दानादि च तत् भाषणम्।

(ल) उदाहरति यथेति। स्पष्टम्। अत्र धर्मस्य प्रियवाक्यम् एहीति धर्मलोकस्य दानञ्च।

(व) पूर्ववाक्यमाह पूर्ववाक्यमिति। यथोक्तस्य अर्थस्य उपदर्शनं समुचितोत्तरदानं पूर्ववाक्यं विज्ञेयम्।

(श) उदाहरति यथेति। भानुमती दुर्य्योधनपत्नी। पूर्वं भानुमत्या पाञ्चालीं प्रति परिहसितम् इदानीं दुर्य्योधने निहते भीमसेनेन तस्य प्रत्युत्तरमभिहितम्।

(ष) काव्यसंहारमाह वरेति। वरस्य अभीष्टस्य यत् प्रदानं तस्य सम्प्राप्तिः काव्यस्य संहार इष्यते।

यथा सर्वत्र। "किन्ते भूयः प्रियमुपकरोमीति"।

नृपदेशादिशान्तिस्तु

प्रशस्तिरभिधीयते ॥ ४०५ ॥ [ख]

यथा प्रभावत्याम्।

"राजानः सुतनिर्विशेषमधुना पश्यन्तु नित्यं प्रजा
जीयासुः सदसद्विवेकपटवः सन्तो गुणग्राहिणः।
शस्यस्वर्णसमृद्धयः समधिकाः सन्तु क्षमामण्डले
भूयादव्यभिचारिणी त्रिजगतो भक्तिश्च नारायणे" ॥ (छ)

अत्र च उपसंहारप्रशस्त्योरन्त एकेन क्रमेणैवं स्थितिः।

"इह च मुखसन्धौ उपक्षेपपरिकरपरिन्यासयुक्त्युद्भेदसमाधानानां प्रतिमुखे च परिसर्पणप्रगमनवज्रोपन्यासपुष्पाणां गर्भे अभूताहरणमार्गत्रोटकावक्षेपाणां विमर्षे अपवादशक्तिव्यवसायप्ररोचनादानानां प्राधान्यम्। "अन्येषाञ्च यथासम्भवं स्थितिः" इति केचित्।

चतुःषष्टिविधं ह्येतदङ्गं प्रोक्तं मनीषिभिः।

---

(ख) प्रशस्तिमाह नृपेति। नृपस्य देशादेश्च आदिपदेन ब्राह्मणादीनां ग्रहणम्। शान्तिः प्रशस्तिः अभिधीयते।

(छ) उदाहरति यथेति। अधुना साम्प्रतं राजानः सुतनिर्विशेषं पुत्रवदित्यर्थः प्रजाः लोकान्, प्रजा स्यात् सन्ततौ जने इत्यमरः। नित्यं सततं पश्यन्तु अवलोकयन्तु सदसतां विवेके पटवः समर्थाः गुणग्राहिणः सन्तः साधवः जीयासुः जययुक्ता भवेयुः। क्षमामण्डले पृथिवीतले समधिकाः प्रचुराः शस्यानां स्वर्णानाञ्च समृद्धयः सम्पदः सन्तु भवन्तु। तथा त्रिजगतः नारायणे अव्यभिचारिणी अचला भक्तिः भूयात्। शार्दूलविक्रीडितं वृत्तम्।

(ज) चतुःषष्टिविधमिति। एतत् चतुःषष्टिविधम् अङ्गं सन्धेरिति शेषः

कुर्य्यादनियते तस्य सन्धावपि निवेशनम् ॥
रसानुगुणतां वीक्ष्य रसस्यैव हि मुख्यता ॥
॥ ४०६ ॥ [च]

यथा वेणीसंहारे तृतीयाङ्के। दुर्य्योधनकर्णयोर्महत्सम्प्रधारणम्। एवमन्यत्रापि। यत्तु "रुद्रटादिभिर्नियम एव" इत्युक्तं तल्लक्ष्यविरुद्धम् (क)।

इष्टार्थरचनाश्चर्य्यलाभो वृत्तान्तविस्तरः।
रागप्राप्तिः प्रयोगस्य गोप्यानां गोपनन्तथा॥
प्रकाशनं प्रकाश्यानामङ्गानां षड्विधं फलम्।
अङ्गहीनो नरो यद्वन्नैवारम्भक्षमो भवेत्॥
अङ्गहीनं तथा काव्यं न प्रयोगाय युज्यते।
सम्पादयेतां सन्ध्यङ्गं नायकप्रतिनायकौ॥
तदभावे पताकाद्यास्तदभावे तथेतरत् ४०७ [ख]

---

मनीषिभिः विद्वद्भिः प्रोक्तः, अनियते अनिर्धारिते उक्तरीत्या इति भावः सन्धौ अपि रसानुगुणतां वीक्ष्य तस्य चतुःषष्टिविधस्य अङ्गस्य निवेशनं कुर्य्यात् नियताङ्गेऽपि मुखादिसन्धौ रसानुकूल्यविवेचनया अन्यसन्ध्यङ्गान्यपि निवेशयेदिति भावः। हि यतः रसस्यैव मुख्यता प्राधान्यम्।

(क) उदाहरति यथेति। सम्प्रधारणं युक्तिः सा तु मुखसन्धेरङ्गम्। अन्यत्रापि सन्धौ तद्दर्शनं दृश्यते। लक्ष्यविरुद्धं महाकवीनां प्रयोगस्य विरुद्धं महाकविप्रयोगे तस्य नियमस्य दर्शनादिति भावः।

(ख) अङ्गानां फलान्याह इष्टेति। अङ्गानां फलं षड्विधम्। इष्टार्थरचना, आश्चर्य्यलाभः, वृत्तान्तविस्तरः, रागप्राप्तिः प्रयोगस्य गोप्यानां गोपनं

प्रायेण प्रधानपुरुषप्रयोज्यानि सन्ध्यङ्गानि भवन्ति। किन्तु उपक्षेपादित्रयं वीजस्याल्पमात्रसमुद्दिष्टत्वात् अप्रधान-पुरुषप्रयोजितमेव साधु।

**रसव्यक्तिमपेक्ष्यैषामङ्गानां सन्निवेशनम्।**
**न तु केवलया शास्त्रस्थितिसम्पादनेच्छया॥**

॥ ४०८ ॥ [ग]

तथा च यद्वेण्याम्। दुर्य्योधनस्य भानुमत्या सह विप्रलम्भो (घ) दर्शितस्तत्तादृशेऽवसरेऽत्यन्तमनुचितम्।

**अविरुद्धन्तु यद्वृत्तं रसादिव्यक्तयेऽधिकम्।**
**तदप्यन्यथयेद् धीमान् न वदेद्वा कदाचन॥**

॥ ४०९ ॥ [ङ]

---

तथा प्रकाश्यानामङ्गानां प्रकाशनम्। अङ्गहीनः नरः यद्वत् आरम्भक्षमः कार्य्य-क्षमो नैव भवेत् तथा अङ्गहीनं काव्यं प्रयोगाय व्यवहाराय वा अभिनयाय न युज्यते न प्रयोगार्हं भवतीत्यर्थः। नायकप्रतिनायकौ सन्धेः अङ्गं सम्पादयेतां प्रयुञ्जीयातां तस्य सन्ध्यङ्गस्य अभावे पताकाद्याः अर्थप्रकृतीः सम्पादयेतां तदभावे पताकाद्यभावे इतरत् अन्यत् वीजं सम्पादयेतामित्यन्वयः।

(ग) रसेति। रसव्यक्तिं रसस्य प्रकटतामपेक्ष्य एषाम् अङ्गानां सन्निवेशनं प्रयोगः कार्य्यमिति शेषः केवलया शास्त्रस्थितिसम्पादनेच्छया न तु नैव सन्नि-वेशनमिति शेषः रसव्यक्तिर्भवतु वा न भवतु शास्त्रमर्य्यादारक्षणार्थमेव नैषां प्रयोगार्हतेति भावः।

(घ) विप्रलम्भः शृङ्गारभेदः।

(ङ) अविरुद्धमिति। धीमान् जनः अविरुद्धं यत् वृत्तं चरितं, रसा-दीनां व्यक्तये प्रकाशाय तदपि अधिकं यथा तथा अन्यथयेत् अन्यथा कुर्य्यात् विपर्य्यासयेदित्यर्थः, वा कदाचन न वदेत्।

अनयोरुदाहरणं मत्प्रबन्धेषु अभिव्यक्तमेव। अथ वृत्तयः।

शृङ्गारे कौशिकी वीरे सात्त्वत्यारभटी पुनः।
रसे रौद्रे च बीभत्से वृत्तिः सर्वत्र भारती॥
चतस्रो वृत्तयो ह्येताः सर्वनाट्यस्य मातृकाः। [च]
स्युर्नायकादिव्यापारविशेषा नाटकादिषु॥
॥ ४१० ॥ [छ]

तत्र कौशिकी।

या श्लक्ष्णनेपथ्यविशेषचित्रा
स्त्रीसङ्कुला पुष्कलनृत्यगीता।
कामोपभोगप्रभवोपचारा
सा कौशिकी चारुविलासयुक्ता॥
नर्म च नर्मस्फूर्जो
नर्मस्फोटोऽथ नर्मगर्भश्च।
चत्वार्य्यङ्गान्यस्याः ॥ ४११ ॥ [ज]

---

(च) वृत्तीराह शृङ्गार इति। वृत्तयश्चतस्रः, शृङ्गारे कौशिकी, वीरे सात्त्वती, रौद्रे बीभत्से च रसे आरभटी। सर्वत्र एतद्व्यतिरिक्ते भारती एताश्चतस्रः सर्वनाट्यस्य मातृकाः जनन्यः। एतासामन्यतरया वृत्त्या यथोक्तरूपाणि नाटकानि रचयितव्यानीति भावः।

(छ) तासां स्वरूपमाह स्युरिति। नाटकादिषु नायकादीनाम् आदिपदेन नायिकादेर्ग्रहणं व्यापारविशेषाः चेष्टाभेदाः वृत्तय इति शेषः।

(ज) कौशिकीमाह तत्रेति। श्लक्ष्णेन मनोहरेण नेपथ्यविशेषेण नायिकादीनां भूषणविशेषेण चित्रा मनोज्ञा शोभातिशयवती स्त्रीसङ्कुला नारीभूयिष्ठा पुष्कलानि प्रचुराणि नृत्यगीतानि यस्यां तादृशी कामोपभोगः शृङ्गारः तस्य

तत्र ।

वैदग्ध्यक्रीड़ितं नर्म ।

इष्टजनावर्जनकृत्तच्चापि त्रिविधं मतम् ।
विहितं शुद्धहास्येन सशृङ्गारभयेन च ॥४१२॥ [झ]

तत्र केवलहास्येन विहितं यथा रत्नावल्याम् । वासवदत्ता फलकमुद्दिश्य सहासम् । "एसा वि अवरा तव समीवे जा लिहिदा एदं किं अज्ज वसंतस्स विस्साणं" (२१) । सशृङ्गार-हास्येन यथा शाकुन्तले । राजानं प्रति शकुन्तला । "असंतुट्टो उण किं करिस्सदि (२२) । राजा । इदमिति व्यवसितः (ञ) । शकु । वक्त्रं ढौकते" ।

सभयहास्येन यथा रत्नावल्याम् । आलेख्यदर्शनावसरे । "सुसङ्गता । जादो मए एसो वुत्तंतो समं चित्तफलएण । ता देवीए गदुअ णिवेदइस्सं" (२३) एतद्वाक्यसम्बन्धि नर्मोदाहृतम् । एवं वेशचेष्टासम्बन्ध्यपि ।

---

(२१) एषाप्यपरा तव समीपे यथा लिखिता इदं किमार्य्यवसन्तस्य विज्ञानमिति सं० ।

(२२) असन्तुष्टः पुनः किं करिष्यतीति सं० ।

(२३) जातो मया एष वृत्तान्तः समं चित्रफलकेन तत् देव्यै गत्वा निवेदयिष्यामीति सं० ।

---

प्रभवाः उपचाराः अङ्गानि यस्याः तथा चारुभिः मनोरमैः विलासैः धीरोदात्तैरिति सद्ध्वोक्तैः युक्ता च वर्त्तते रसोऽनयेति वृत्तिः कौशिकी । अस्याः कौशिक्याश्चत्वारि अङ्गानि—नर्म, नर्मस्फूर्जः, नर्मस्फोटः तथा नर्मगर्भः ।

(झ) नर्माह वैदग्ध्येति । इष्टजनानां सामाजिकानाम् आवर्जनकृत् मनोरञ्जनकरं वैदग्ध्येन चातुर्य्येण क्रीड़ितं क्रीड़नं भावे क्तप्रत्ययः, नर्म । तच्च त्रिविधं—शुद्धहास्यविहितं, सशृङ्गारहास्यविहितं, सभयहास्यविहितम् ।

(ञ) उदाहरति क्रमेण तत्रेति । व्यवसितः कृतनिश्चयः ।

नर्मस्फूर्जः सुखारम्भो

भयान्तो नवसङ्गमः ॥ ४१३ ॥ [ट]

यथा मालविकायां सङ्केतस्थानमभिसृतायां नायकः ।

"विसृज सुन्दरि ! सङ्गमसाध्वसं

ननु चिरात् प्रभृति प्रणयोन्मुखे ।

प्रतिपद्यस्व गते सहकारतां

त्वमतिमुक्तलताचरितं मयि" ॥ (ठ)

मालविका । "भट्टा देवीए भएण अप्पणोवि पिअं कत्तुं ण पारेमि" (२४) इत्यादि । अथ नर्मस्फोटः ।

नर्मस्फोटो भावलेशैः

सूचितोऽल्परसो मतः ॥४१४॥ [ड]

यथा मालतीमाधवे ।

"गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं

श्वसितमधिकं किन्न्वेतत् स्यात् किमन्यदितोऽथवा ।

---

(२४) भर्त्तुर्देव्या भयेनात्मनोऽपि प्रियं कर्त्तुं न पारयामीति सं० ।

---

(ट) नर्मस्फूर्जमाह नर्मस्फूर्ज इति । सुखारम्भः प्रथमसुखकरः भयान्तः भयावसानः नवः सङ्गमः नर्मस्फूर्जः ।

(ठ) उदाहरति यथेति । विसृजेति ननु सुन्दरि ! सङ्गमे साध्वसं भयं विसृज त्यज, चिरात् प्रभृति प्रणयोन्मुखे प्रणयाथिनि अतएव सहकारतां रसालतां गते मयि त्वम् अतिमुक्तलतायाः माधवीलतायाः चरितं प्रतिपद्यस्व, यथा अतिमुक्तलता सहकारमालिङ्गति तथा त्वं मामालिङ्गस्वेति भावः । द्रुतविलम्बितं वृत्तं, द्रुतविलम्बितमाह नभौ भराविति लक्षणात् ।

(ड) नर्मस्फोटमाह नर्मेति । भावलेशैः ईषत् सूचितैः भावैरित्यर्थः सूचितः अल्परसः शृङ्गारः नर्मस्फोटो मतः ।

भ्रमति भुवने कन्दर्पाज्ञा विकारि च यौवनं
ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम्" ॥ (ढ)

अलसगमनादिभिर्भावलेशैर्माधवस्य मालत्यामनुरागः स्तोकः प्रकाशितः।

नर्मगर्भा व्यवहृति-
र्नेतुः प्रच्छन्नवर्त्तिनः ॥ ४१५ ॥ [ण]

यथा तत्रैव। सखीरूपधारिणा माधवेन मालत्या मरणव्यवसायवारणम्।

अथ सात्त्वती।

सात्त्वती बहुला सत्त्वशौर्य्यत्यागदयार्जवैः।
सहर्षा क्षुद्रशृङ्गारा विशोका साद्भुता तथा ॥
उत्थापकोऽथ संघात्यः संलापः परिवर्त्तकः।

---

(ढ) उदाहरति यथेति। गमनमिति। गमनम् अलसम् आलस्ययुक्तं मन्दमित्यर्थः, दृष्टिः शून्या नावहिता कुत्रापि पततीति भावः, शरीरम् असौष्ठवं सौष्ठवरहितम् आहार्य्यशोभादिवर्जनात् मलाद्यपनयनाभावाच्च इति भावः, श्वसितं निःश्वासः अधिकं दीर्घमित्यर्थः। किञ्च किमपि एतत् अथवा इतः अस्मात् अन्यत् किं स्यात्। भुवने जगति कन्दर्पस्य आज्ञा भ्रमति, यौवनञ्च विकारि विकारकारणम्। ते ते ललितमधुरा ललितेन वाग्वेशयोः मधुरता तद्वत् शृङ्गारचेष्टितं ललितमिति लक्षणोक्तेन मधुराः मनोहराः भावाः प्रकाराः धीरतां धैर्य्यं क्षिपन्ति क्षपयन्ति च। हरिणीवृत्तम्।

(ण) नर्मगर्भमाह नर्मगर्भ इति। प्रच्छन्नवर्त्तिनः गूढचारिणः नेतुर्नायकस्य व्यवहृतिः व्यवहारः नर्म गर्भे यस्य तथोक्तः।

(त) सात्त्वतीमाह सत्येति। सत्त्वेन महानुभावतया शौर्य्येण बलेन त्यागेन दानशक्त्या दयया आर्जवेन च बहुला पूर्णा सहर्षा सानन्दा क्षुद्रशृङ्गारा अल्प-

विशोका इति चत्वारः सात्त्वत्याः परि-
कीर्त्तिताः ॥ [त]

उत्तेजनकरी शत्रोर्वागुत्थापक उच्यते ॥४१६॥ [थ]

यथा वीरचरिते पञ्चमाङ्के ।

"आनन्दाय च विस्मयाय च मया दृष्टोऽसि दुःखाय वा
वैतृष्ण्यन्तु ममापि सम्प्रति कुतस्त्वद्दर्शने चक्षुषः ? ।
त्वत्साङ्गत्यसुखस्य नास्मि विषयस्तत् किं वृथा व्याहृतैः ?
अस्मिन् विश्रुतजामदग्न्यदमने पाणौ धनुर्जृम्भताम्" ॥ (द)

मन्त्रार्थदैवशक्त्यादेः संघात्यः सङ्घभेदनम् ४१७ [ध]

---

शृङ्गारभावा विशोका शोकरहिता साद्भुता सचमत्कारा वृत्तिः सात्त्वती । तस्याश्चत्वारो भेदाः—उत्थापकः, संघात्यः, संलापः, परिवर्त्तकश्च ।

(थ) उत्थापकमाह उत्तेजनकरीति । शत्रोः प्रतिनायकस्य उत्तेजनकरी क्रोधोद्दीपनी वाक् उत्थापक उच्यते ।

(द) उदाहरति यथेति । आनन्दायेति । रामं प्रति वालिन उक्तिः । आनन्दाय प्रीतये विस्मयाय लोकोत्तरचरितरूपदर्शनजनितचमत्काराय वा पश्चात्तु दुःखाय एतादृशोऽपि हन्तव्य इति विषादायेत्यर्थः सम्प्रति दृष्टोऽसि, तु पुनः तव दर्शने मम चक्षुषः वैतृष्ण्यमपि तृष्णाभावोऽपि तृप्तिरपि कुतः ? नैव तृप्तिरस्तीत्यर्थः पुनः पुनस्तव दर्शनेच्छा मम वर्त्तते इति भावः । तव सङ्गतिरेव साङ्गत्यं सङ्ग इत्यर्थः तेन यत् सुखं तस्य विषयः पात्रम् न अस्मि अहं तव मैत्रीसुखलोलुपो न इति भावः । तत् तस्मात् हेतोः वृथा निरर्थकैरित्यर्थः व्याहृतैः भाषितैः किम् ? न किमपि प्रयोजनमित्यर्थः, अस्मिन् विश्रुतं प्रसिद्धं प्रख्यातमित्यर्थः जामदग्न्यस्य भार्गवस्य दमनं येन तादृशे पाणौ धनुः जृम्भतां राजताम् । धनुर्गृहाणेति भावः । शार्दूलविक्रीड़ितं वृत्तम् ।

(ध) संघात्यमाह मन्त्रेति । मन्त्रः मन्त्रणाबलम् अर्थः धनं दैवशक्तिः दैवी क्षमता आदिपदेन कौशलादिग्रहणम् एतस्मात् कारणात् सङ्घस्य समवायस्य भेदनं पृथक्करणं संघात्यः ।

मन्त्रशक्त्या यथा मुद्राराक्षसे राक्षससहायानां चाणक्येन स्वबुद्ध्या भेदनम्। अर्थशक्त्यापि तत्रैव। दैवशक्त्या यथा रामायणे रावणाद्विभीषणस्य भेदः।

संलापः स्याद् गभीरोक्ति-
नानाभावसमाश्रयः॥ ४१८॥ [न]

यथा वीरचरिते रामः। "असंशयं किल सपरिवार-कार्त्तिकेयविजयावर्जितेन भगवता नीललोहितेन परिवत्सर-सहस्रान्तेवासिने तुभ्यं प्रसादीकृतः परशुः। परशुरामः। राम! दाशरथे! स एवायमार्य्यपादानां प्रियः परशुः" इत्यादि (प)।

प्रारब्धादन्यकार्य्याणां
करणं परिवर्त्तकः॥ ४१९॥ [फ]

यथा वेण्यां भीमः। "सहदेव! गच्छ त्वं गुरुमनुवर्त्तस्व अहमप्यस्त्रागारं प्रविश्यायुधसहायो भवामीति यावत् अथवा आमन्त्रयितव्यैव मया पाञ्चालीति" (ब)। अथारभटी।

---

(न) संलापमाह संलाप इति। नानाभावानां समाश्रयः गभीरा अर्थगुर्वी उक्तिः संलापः स्यात्।

(प) उदाहरति यथेति। सपरिवारेति। सपरिवारस्य सानुचरस्य कार्त्तिकेयस्य विजयेन परशुरामकर्तृकेणेति भावः आवर्जितः वशीकृतः प्रीणित इत्यर्थः तेन। अत्र दैवविषयरतिरूपे वीररसस्य समाश्रयेण उक्तेर्गभीरता।

(फ) परिवर्त्तकमाह प्रारब्धादिति। प्रारब्धात् कर्त्तुमुपक्रान्तात् कार्य्यात् अन्यकार्य्याणां करणं परिवर्त्तकः।

(ब) उदाहरति यथेति। स्पष्टम्। अत्र आयुधागारप्रवेशरूपात् कार्य्यात् पाञ्चालीसमामन्त्रणरूपस्य अन्यकार्य्यस्य करणम्।

मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्तादिचेष्टितैः।
संयुक्ता वधबन्धाद्यैरुद्धतारभटी मता॥ [भ]
वस्तूत्थापनसम्फेटौ संक्षिप्तिरवपातनम्।
इति भेदास्तु चत्वार आरभट्याः प्रकीर्त्तिताः॥[म]
मायाद्युत्थापितं वस्तु वस्तूत्थापनमुच्यते॥४२०॥[य]

यथा उदात्तराघवे।

"जीयन्ते जयिनो नितान्ततिमिरव्रातैर्वियद्व्यापिभि-
र्भास्वन्तः सकला रवेरपि कराः कस्मादकस्मादमी।
एते चोग्रकबन्धकण्ठरुधिरैराध्मायमानोदरा-
मुञ्चन्त्याननकन्दरानलमुचस्तीव्रान् रवान् फेरवाः" इत्यादि(र)।

---

(भ) आरभटीमाह मायेति। माया छलविशेषः इन्द्रजालम् अद्भुत-प्रदर्शकविद्याविशेषः संग्रामो युद्धं क्रोधेन उद्भ्रान्तत्वादि। इत्येवं चेष्टितैः व्यापारैः तथा वधबन्धनाद्यैश्च संयुक्ता उद्धता दारुणा वृत्तिः आरभटी।

(म) तद्भेदानाह वस्त्वित्यादि। वस्तूत्थापनं सम्फेटः संक्षिप्तिः अवपातनम् एते चत्वारः आरभट्याः भेदाः कीर्त्तिताः।

(य) तत्र वस्तूत्थापनमाह मायेति। मायादिना उत्थापितं वस्तु वस्तूत्थापनम् उच्यते।

(र) उदाहरति यथेति। जीयन्त इति। अमी जयिनः उत्कर्ष-शालिनः भास्वन्तः दीप्यमानाः सकलाः समग्राः रवेः सूर्यस्य कराः मयूखा अपि कस्मात् कथम् अकस्मात् सहसा वियद्व्यापिभिः गगनाच्छादिभिः नितान्ततिमिर-व्रातैः गाढान्धकारनिचयैः जीयन्ते पराभूयन्ते आच्छाद्यन्ते इत्यर्थः। एते च फेरवाः शृगालाः उग्राणां भीषणानां कबन्धानाम् अशिरस्ककलेवराणां कण्ठरुधिरैः आध्मायमानं पूर्य्यमाणम् उदरं येषां तादृशाः तथा आननं मुखमेव कन्दरा गुहा गर्त्तविशेष इत्यर्थः तस्याः अनलं मुञ्चन्ति त्यजन्तीति तथोक्ताः उल्कामुखा इत्यर्थः सन्तः तीव्रान् उग्रान् रवान् मुञ्चन्ति त्यजन्ति कठोरं शब्दायन्ते इत्यर्थः। शार्दूलविक्रीडितं वृत्तम्। अत्र मायया अन्धकारकबन्धादीनां वस्तूनाम् उत्था-पनम्।

सम्फेटस्तु समाघातः
क्रुद्धसत्वरयोर्द्वयोः ॥ ४२१ ॥ [ल]

यथा मालत्यां माधवाघोरघण्टयोः ।

संक्षिप्तिर्वस्तुरचना शिल्पैरितरथापि वा ।
संक्षिप्तिः स्यान्निवृत्तौ च नेतुर्नेत्रन्तरग्रहः ४२२ [व]

यथा उदयनचरिते किलिञ्जहस्तिप्रयोगः । द्वितीयं यथा । वालिनिवृत्त्या सुग्रीवः । यथा वा परशुरामस्यौद्धत्यनिवृत्त्या शान्तत्वापादनम् । "पुण्या ब्राह्मणजातिरिति" (श) ।

प्रवेशत्रासनिष्क्रान्तिहर्षविद्रवसम्भवम् ।
अवपातनमित्युक्तम् ॥ ४२३ ॥ [ष]

यथा कृत्यरावणे षष्ठेऽङ्के । "प्रविश्य खड्गहस्तः पुरुष इति" अतः प्रभृति निष्क्रमणपर्य्यन्तम् ।

पूर्वमुक्तैव भारती ॥ ४२४ ॥

अथ नाट्योक्तयः ।

अश्राव्यं खलु यद् वस्तु, तदिह स्वगतं मतम् ।

---

(ल) सम्फेटमाह सम्फेट इति । क्रुद्धसत्वरयोः समाघातः सम्यक् प्रहारः सम्फेटः ।

(व) संक्षिप्तिमाह संक्षिप्तिरिति । शिल्पैः इतरथापि अन्यप्रकारेणापि वस्तूनां रचना संक्षिप्तिः । किञ्च नेतुर्नायकस्य निवृत्तौ स्वव्यापारात् इति भावः नेत्रन्तरस्य नायकभेदस्य ग्रहः ग्रहणं ज्ञानमित्यर्थः संक्षिप्तिः ।

(श) उदाहरति यथेति । किलिञ्जहस्तिप्रयोगः काष्ठनिर्मितहस्तिप्रयोगः । अत्र शिल्पेन रचना । अन्यत् स्पष्टम् ।

(ष) अवपातनमाह प्रवेशेति स्पष्टम् ।

सर्वश्राव्यं प्रकाशं स्यात्तद्भवेदपवारितम् ॥
रहस्यन्तु यदन्यस्य परावृत्त्य प्रकाश्यते।
त्रिपताककरेणान्यानपवार्य्यान्तरा कथाम् ॥
अन्योन्यामन्त्रणं यत् स्याज्जनान्ते तज्जनान्तिकम्।
किं ब्रवीषीति यत् नाट्ये विना पात्रं प्रयुज्यते॥
श्रुत्वेवानुक्तमप्यर्थं तत् स्यादाकाशभाषितम्॥४२५[स]

यः कश्चिदर्थो यस्माद् गोपनीयस्तस्यान्तरत ऊर्द्ध्वं सर्वाङ्गुलिनामितानामिकं त्रिपताकलक्षणं करं कृत्वा अन्येन सह यन्मन्त्र्यते तत् जनान्तिकं परावृत्त्यान्यस्य रहस्यकथनमपवारितम्। शेषं स्पष्टम्।

दत्तां सिद्धाञ्च सेनाञ्च वेश्यानां नाम दर्शयेत्।
दत्तप्रायाणि वणिजां चेटचेट्योस्तथा पुनः॥
वसन्तादिषु वर्ण्यस्य वस्तुनो नाम यद्भवेत्॥४२६[ह]

---

(स) नाट्योक्तीराह सर्वेति। अश्राव्यम् अन्यैः श्रोतुमनर्हमित्यर्थः। अन्यस्य पराहृत्य अन्यं जनं पश्चात् कृत्वा यत् रहस्यं गुप्तं वस्तु प्रकाश्यते कथ्यते तत् अपवारितं भवेत्। जनान्ते जनसमीपे तिस्रः पताकाः यस्य तादृशेन उत्क्षिप्ताङ्गुलित्रयेणेत्यर्थः करेण अन्यान् जनान् अपवार्य्य आच्छाद्य अन्तरा मध्ये यत् अन्योन्यामन्त्रणं परस्परम् आलापः स्यात् तत् जनान्तिकम्। नाट्ये पात्रं व्यक्तिं विना अनुक्तमपि अर्थं विषयं श्रुत्वेव किं ब्रवीषीति यत् प्रयुज्यते तत् आकाशभाषितं स्यात्।

(ह) वेश्यानां नाम दत्तां सिद्धां सेनाञ्च दर्शयेत् यथा कामदत्ता मदनसेना इत्यादि। तथा वणिजां दत्तप्रायाणि नामानि दर्शयेत् यथा धनदत्तो नाम वणिगित्यादि। तथा वसन्तादिषु वर्ण्यस्य वर्णनीयस्य वस्तुनः यत् नाम भवेत् तत् चेटचेट्योः प्रदर्शयेत्। यथा कलहंसादिः।

वेश्या यथा वसन्तसेनादिः। वणिग् विष्णुदत्तादिः। चेटः कलहंसादिः। चेटी मन्दारिकादिः।

**नाम कार्य्यं नाटकस्य**
**गर्भितार्थप्रकाशकम् ॥४२७॥** [च]

यथा रामाभ्युदयादिः।

**नायिकानायकाख्यानां**
**संज्ञाप्रकरणादिषु ॥ ४२८ ॥** [ क ]

यथा मालतीमाधवादिः।

**नाटिकासट्टकादीनां**
**नायिकाभिर्विशेषणम् ॥ ४२९ ॥** [ख]

यथा रत्नावली-कर्पूरमञ्जर्य्यादिः।

**प्रायेण ण्यन्तकः साधि-**
**र्गमेः स्थाने प्रयुज्यते ॥ ४३० ॥** [ ग ]

यथा शाकुन्तले। ऋषी। गच्छाव इत्यर्थे साधयावस्तावत्।

---

( च ) नाटकस्य नाम गर्भितस्य सन्दर्भसूचकव्युत्पत्तिलभ्यस्य अर्थस्य प्रकाशकं सूचकं कार्य्यम्।

( क ) प्रकरणादिषु आदिपदेन भाणादिपरिग्रहः नायिकानायकाख्यानां संज्ञा सङ्केतः कार्य्य इति शेषः।

( ख ) नाटिकासट्टकादीनां प्रयोगाणां नायिकाभिर्विशेषणं विशिष्य व्यवस्थापनं कार्य्यमिति शेषः तेषां नायिकाप्रधानत्वादिति भावः।

( ग ) प्रायेणेति। ण्यन्तकः साधिः साधधातुः गमेः गमधातोः स्थाने प्रायेण प्रयुज्यते प्रायेणेत्यभिधानात् अन्यदपि तत् समानार्थकं प्रयोज्यमिति भावः।

राजा स्वामीति देवेति भृत्यैर्भट्टेति चाधमैः ।
राजर्षिभिर्वयस्येति तथा विदूषकेण च ॥

राजन्नित्यृषिभिर्वाच्यः सोऽपत्यप्रत्ययेन च ।
स्वेच्छया नामभिर्विप्रैर्विप्र आर्य्येति चेतरैः ॥

वयस्येत्यथवा नाम्ना वाच्यो राज्ञा विदूषकः ।
वाच्यौ नटीसूत्रधारावार्य्यनाम्ना परस्परम् ॥

सूत्रधारं वदेद्भाव इति वै पारिपार्श्विकः ।
सूत्रधारो मारिषेति हण्डे इत्यधमैः समाः ।

वयस्येत्युत्तमैर्हंहो मध्यैरार्य्येति चाग्रजः ।
भगवन्निति वक्तव्याः सर्वैर्देवर्षिलिङ्गिनः ॥

वदेद्राज्ञीञ्च चेटीञ्च भवतीति विदूषकः ।
आयुष्मन् रथिनं सूतो वृद्ध तातेति चेतरैः ॥

वत्स पुत्रक तातेति नाम्ना गोत्रेण वा सुतः ।

---

(घ) राजेति । राजा भृत्यैः स्वामी इति देव इति वा अधमैः नीचैः जनैः भट्टा इति राजर्षिभिः अन्यैरिति शेषः तथा विदूषकेण वयस्य इति ऋषिभिः राजन् इति अपत्यप्रत्ययेन अपत्यप्रत्ययान्तपदेन इत्यर्थः यथा दाशरथे पाण्डव इत्यादिरूपेण वाच्यः । विप्रः विप्रैः स्वेच्छया अपत्यप्रत्ययेन नामभिर्वा इतरैः क्षत्रियादिभिः आर्य्य इति वाच्यः । विदूषकः राज्ञा वयस्य इति नाम्ना वा वाच्यः । विदूषकः राज्ञा वयस्य इति नाम्ना वा वाच्यः । नटीसूत्रधारौ परस्परम् आर्य्यनाम्ना नट्या सूत्रधारः आर्य्य इति सूत्रधारेण नटी आर्य्ये इति रूपेणेत्यर्थः वाच्यौ । पारिपार्श्विकः सूत्रधारादवरो नटः सूत्रधारं भाव इति वदेत् । सूत्रधारः तं पारिपार्श्विकं मारिष इति वदेत् । अधमैः नीचैः जनैः समाः हण्डे इति वाच्याः । उत्तमैर्जनैः समा वयस्य इति, मध्यैः समाः हंहो इति वाच्याः । अग्रजः ज्येष्ठः भ्राता आर्य्य इति वाच्यः ।

शिष्योऽनुजश्च वक्तव्योऽमात्य आर्य्येति चाधमैः ॥
विप्रैरयममात्येति सचिवेति च भण्यते ।
साधो इति तपस्वी च प्रशान्तश्चोच्यते बुधैः ॥
अगृहीताभिधः पूज्यः शिष्याद्यैर्विनिगद्यते ।
उपाध्यायेति चाचार्य्यो महाराजेति भूपतिः ॥
स्वामीति युवराजस्तु कुमारो भर्त्तृदारकः ।
सौम्य भद्रमुखेत्येवमधमैस्तु कुमारकः ॥
वाच्या प्रकृतिभी राज्ञः कुमारी भर्त्तृदारिका ॥
पतिर्यथा तथा वाच्या ज्येष्ठमध्याधमैः स्त्रियः ।
हलेति सदृशी प्रेष्या हञ्जे वेश्याऽज्जुका तथा ॥

---

सर्वैः देवर्षिलिङ्गिनः देवलिङ्गिनः ऋषिलिङ्गिनश्च भगवन् इति वाच्याः । विदूषकः राज्ञीश्च चेटीं राज्ञः सहचरीमित्यर्थः भवतीति वदेत् । सूतः सारथिः रथिनम् आयुष्मन् इति वदेत् । वृद्धो जनः इतरैः कनिष्ठैः तात इति सुतः पुत्रः शिष्यः अनुजः कनिष्ठश्च वत्स पुत्रक तात इति नाम्ना गोत्रेण अपत्यप्रत्ययेन इत्यर्थः वा वाच्यः । अमात्यः अधमैः जनैः आर्य्य इति विप्रैः अमात्य इति, सचिव इति वा भण्यते । तपस्वी प्रशान्तश्च जनः बुधैः साधो इति उच्यते । शिष्याद्यैः शिष्यप्रभृतिभिः आद्यशब्देन भ्रातृपुत्रादीनां ग्रहणम् । पूज्यः पूजनीयो जनः अगृहीता अभिधा यस्य तादृशः नाम अगृहीत्वा सम्मानसूचकेन पदेन वाच्य इति शेषः । आचार्य्यः वेदाध्यापयिता, उपनीय ददद् वेदमाचार्य्यः स उदाहृत इति वचनात् गुरुर्वा उपाध्याय इति भूपतिः प्रजाभिः महाराज इति स्वामी इति वा वाच्यः । युवराजस्तु कुमारः भर्त्तृदारको वा वाच्यः । अधमैस्तु कुमारकः सौम्य भद्रमुख इत्येवं वाच्यः । प्रकृतिभिरमात्यादिभिः राज्ञः कुमारी भर्त्तृदारिका वाच्या । पतिर्यथा उत्तमः उत्तमेन वयस्य इति, अधमेन अधमः हण्डे इति, मध्यमेन मध्यमः हंहो इति वाच्यः । तथा ज्येष्ठमध्याधमैः स्त्रियः वाच्या ज्येष्ठया स्त्रिया ज्येष्ठा स्त्री वयस्येति मध्यमया स्त्रिया मध्यमा स्त्री हंहो इति अधमया,

कुट्टिन्यम्बेत्यनुगतैः पूज्या च जरतीजनैः ।
आमन्त्रणीयाः पाषण्डा वाच्याः स्वसमयागतैः ॥
शकादयश्च सम्भाष्या भद्रदत्तादिनामभिः ।
यस्य यत्कर्म शिल्पं वा विद्या वा जातिरेव वा ॥
तेनैव नाम्ना वाच्योऽसौ ज्ञेयाश्चान्ये यथोचितम्
॥ ४३१ ॥ [घ]

अथ भाषाविभागः ।

पुरुषाणामनीचानां संस्कृतं स्यात् कृतात्मनाम् ।
शौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषिताम् ॥
आसामेव तु गाथासु महाराष्ट्रीं प्रयोजयेत् ।
अत्रोक्ता मागधी भाषा राजान्तःपुरचारिणाम् ॥
चेटानां राजपुत्राणां श्रेष्ठिनां चार्द्धमागधी ।
प्राच्या विदूषकादीनां धूर्त्तानां स्यादवन्तिका ॥

---

स्त्रिया अधमा स्त्री हण्डे इति वाच्येत्यर्थः । सदृशी स्वसमाना स्त्री हलेति वाच्या । प्रेष्या किङ्करी हञ्जे इति वेश्या अज्जुका इति वाच्या । कुट्टिनी अनुगतैः जनैः अम्बा इति पूज्या तथा जरती वृद्धा स्त्रीजनैः अम्बा इति वाच्या । पाषण्डाः शाक्यादयः स्वसमयागतैः स्वसङ्केतानुसारिभिः आमन्त्रणैः सम्बोधनपदैः वाच्याः । शकादयः शकयवनकिरातप्रभृतयः भद्रदत्ता दिनामभिः सम्भाष्याः । यस्य यत् कर्म शिल्पं वा विद्या वा जातिर्वा तेनैव तदनुगतेनैव नाम्ना असौ वाच्यः अन्ये यथोचितं ज्ञेयाः ।

(ङ) भाषाविभागमाह अथेति । अनीचानाम् उत्कृष्टानां कृतात्मनां विदुषां भाषा संस्कृतं स्यात् । तादृशीनाम् उत्कृष्टानामित्यर्थः योषितां शौरसेनी भाषा प्रयोक्तव्या । आसामेव उत्कृष्टानां नारीणामेव गाथासु सङ्गीतेषु

योधनागरिकादीनां दाक्षिणात्या हि दीव्यताम्।
शकाराणां शकादीनां शाकारीं सम्प्रयोजयेत्॥
बाह्लीकभाषा दिव्यानां द्राविड़ी द्रविड़ादिषु।
आभीरेषु तथाऽभीरी चाण्डाली पुक्कसादिषु॥
आभीरी शावरी चापि काष्ठपत्रोपजीविषु।
तथैवाङ्गारकारादौ पैशाची स्यात् पिशाचवाक्॥
चेटीनामप्यनीचानामपि स्यात् शौरसेनिका।
बालानां षण्डकानाञ्च नीचग्रहविचारिणाम्॥
उन्मत्तानामातुराणां सैव स्यात् संस्कृतं क्वचित्।
ऐश्वर्य्येण प्रमत्तस्य दारिद्र्योपस्कृतस्य च।
भिक्षुबन्धधरादीनां प्राकृतं सम्प्रयोजयेत्॥
संस्कृतं सम्प्रयोक्तव्यं लिङ्गिनीषूत्तमासु च।

---

महाराष्ट्रीं प्रयोजयेत्। अत्र नाट्ये राज्ञः अन्तःपुरचारिणां भाषा मागधी। चेटानां राजभृत्यानां राजपुत्राणां श्रेष्ठिनाञ्च अर्द्धमागधी। विदूषकादीनां भाषा प्राच्या। धूर्त्तानां भाषा अवन्तिका। दीव्यतां क्रीड़तां योधनागरिकादीनां दाक्षिणात्या भाषा। शकाराणां शकादीनाञ्च शाकारीं भाषां सम्प्रयोजयेत्। दिव्यानां बाह्लीकभाषा, द्रविड़ादिषु द्राविड़ी भाषा प्रयोज्या इति शेषः। आभीरेषु आभीरी, पुक्कसादिषु चाण्डाली, काष्ठपत्रोपजीविषु काष्ठजीविषु पत्रजीविषु च आभीरी शावरी च भाषा। अङ्गारकारादौ तथैव आभीरी वा शावरी भाषा। पिशाचानां वाक् पैशाची। अनीचानाम् उत्कृष्टानां चेटीनामपि शौरसेनिका भाषा। बालानां षण्डकानां वर्षवराणां नीचानां ग्रहविचारिणां दैवज्ञानामित्यर्थः उन्मत्तानाम् आतुराणाञ्च सैव शौरसेनिकेत्यर्थः, क्वचित् संस्कृतञ्च प्रयोज्यम्। ऐश्वर्य्येण प्रमत्तस्य दारिद्र्येण उपस्कृतस्य अभिभूतस्य भिक्षूणां बन्धधरादीनाञ्च प्राकृतं वचनं सम्प्रयोजयेत्। लिङ्गिनीषु प्रव्रजितासु उत्तमासु-

देवीमन्त्रिसुतावेश्यास्वपि कैश्चित्तथोदितम् ॥
यद्देशं नीचपात्रन्तु तद्देशं तस्य भाषितम्।
कार्य्यं तश्चोत्तमादीनां कार्य्यो भाषाविपर्य्ययः ॥
योषित् सखीबालवेश्याकितवाप्सरसां तथा।
वैदग्ध्यार्थं प्रदातव्यं संस्कृतं चान्तरान्तरा ॥

४३२ ॥ [ङ]

एषामुदाहरणान्याकरेषु बोद्धव्यानि। भाषालक्षणानि मम तातपादानां भाषार्णवे।

षट्‌त्रिंशल्लक्षणान्यत्र नाट्यालङ्कृतयस्तथा।
त्रयस्त्रिंशत् प्रयोज्यानि वीथ्यङ्गानि, त्रयोदश ॥
लास्याङ्गानि दश यथालाभं रसव्यपेक्षया ॥

४३३ ॥ [च]

यथालाभं प्रयोज्यानीति सम्बन्धः। अत्रेति नाटके। तत्र लक्षणानि।

भूषणाक्षरसंघातौ शोभोदाहरणं तथा।

---

उत्कृष्टासु नारीषु च संस्कृतं प्रयोक्तव्यम्। केचित्त्वमे: देवीमन्त्रिसुतवेश्यासु अपि तथा संस्कृतमित्यर्थः उदितम्। नीचानां पात्रं स्थानं यद्देशं तस्य भाषितं तद्देशं तद्देशप्रसूचितं तत्र नीचा भाषा प्रयोक्तव्या इत्यर्थः। तत्र देशे उत्तमादीनां भाषाविपर्य्ययः देशानुरूपा भाषेत्यर्थः प्रयोक्तव्या। योषित्प्रभृतीनाम् अन्तरान्तरा मध्ये मध्ये वैदग्ध्यार्थं वैचित्र्यार्थं विशेषितार्थं वा संस्कृतं प्रदातव्यम्।

(च) नाट्यालङ्कृतीरिति षट्‌त्रिंशदिति। अत्र नाटके लक्षणानि षट्‌त्रिंशत्, तथा नाट्यालङ्कृतयः त्रयस्त्रिंशत् वीथ्यङ्गानि त्रयोदश, लास्याङ्गानि दश, यथालाभं यथोचितं रसव्यपेक्षया रसानुगुण्यमपेक्ष्य इत्यर्थः प्रयोज्यानि।

हेतुसंशयदृष्टान्तास्तुल्यतर्कः पदोच्चयः ॥
निदर्शनाभिप्रायौ च प्राप्तिर्विचार एव च ।
दिष्टोपदिष्टे च गुणातिपातातिशयौ तथा ॥
विशेषणनिरुक्ती च सिद्धिर्भ्रंशविपर्य्ययौ ।
दाक्षिण्यानुनयौ मालाऽर्थापत्तिर्गर्हणं तथा ॥
पृच्छा प्रसिद्धिः सारूप्यं संक्षेपो गुणकीर्त्तनम् ।
लेशो मनोरथोऽनुक्तसिद्धिः प्रियवचस्तथा
॥ ४३४ ॥ [छ]

तत्र ।

लक्षणानि गुणैः सालङ्कारैर्योगस्तु भूषणम् ॥
॥ ४३५ ॥ [ज]

यथा ।

"आक्षिपन्त्यरविन्दानि मुग्धे ! तव मुखश्रियम् ।
कोषदण्डसमग्राणां किमेषामस्ति दुष्करम्" ॥ (झ)

---

(छ) लक्षणान्याह तत्रेति । तत्र तेषु मध्ये भूषणादीनि षट्त्रिंशत् लक्षणानि भवन्ति ।

(ज) भूषणमाह गुणैरिति । सालङ्कारैः अलङ्काराः वक्ष्यमाणाः अनुप्रासोपमादयः तैः सहितैः गुणैः माधुर्य्यादिभिः योगस्तु मेलनमेव भूषणम् ।

(झ) उदाहरति आक्षिपन्तीति । हे मुग्धे ! सुन्दरि ! अरविन्दानि पद्मानि तव मुखस्य श्रियं कान्तिम् आक्षिपन्ति निन्दन्ति । तथाहि, कोषदण्डसमर्थानां कोषः वीजकोषः धनागारश्च दण्डः मृणालं चतुर्थोपायश्च तेन समर्थानां युक्तानाम् एषाम् अरविन्दानां किं दुष्करम् असाध्यम् अस्ति ? सर्वमेव सुकरमित्यर्थः । अत्र अरविन्दानामचेतनतया निन्दा न सम्भवतीति असम्भवद्वस्तुसम्बन्ध-

वर्णनाक्षरसंघातश्चित्रार्थैरक्षरैर्मितैः ॥ ४२६ ॥ [ञ]

यथा शाकुन्तले राजा । "कच्चित् सखीं विनाऽतिबाधते शरीरसन्तापः । प्रियंवदा । संपदं लद्धोसहो उवसमं गमिस्सदि (२५) (ट) ।

सिद्धैरर्थैः समं यत्र असिद्धोऽर्थः प्रकाशते ।
श्लिष्टलक्षणचित्रार्था सा शोभेत्यभिधीयते ॥
४२७ ॥ [ ठ ]

यथा ।

"सद्वंशसम्भवः शुद्धः कोटिदोऽपि गुणान्वितः ।
कामं धनुरिव क्रूरो वर्जनीयः सताम्प्रभुः" ॥ (ड)

---

( २५ ) साम्प्रतं लब्धौषध उपशमं गमिष्यतीति सं० ।

---

रूपा तथा अर्थान्तरन्यासः श्लेषश्च एते अलङ्काराः माधुर्य्यप्रसादाभ्यां गुणाभ्यां उपकृता काव्यं भूषयन्तीति भूषणम् ।

( ञ ) अक्षरसंघातमाह वर्णनेति । चित्रार्थैः मनोहरार्थसूचकैः मितैः अल्पैः अक्षरैः वर्णना रचना अक्षरसंघातः ।

( ट ) उदाहरति यथेति । अत्र सम्पदमित्यादिचित्रार्थाल्पवर्णैः रचना ।

( ठ ) शोभामाह सिद्धैरिति । यत्र सिद्धैः साधयितुमिष्टैः अर्थैः समं सह असिद्धः अनभिमतः अर्थः प्रकाशते सा श्लिष्टेन श्लेषालङ्कृतेन लक्षणेन चित्रार्था विदग्धमनोरञ्जनार्था रचना इति शेषः शोभा इति अभिधीयते कथ्यते ।

( ड ) उदाहरति सद्वंशेति । सन् साधुः वंशः अन्वयः अन्यत्र वेणुविशेषः । शुद्ध इत्युभयत्र समानं, कोटिद इति कोटिः संख्याविशेषः अन्यत्र अग्रभागः, गुणान्वितः गुणः शौर्य्यगाम्भीर्य्यादिरन्यत्र मौर्वी, क्रूरः निष्ठुरः निर्दयकार्य्यकारित्वादिति भावः उभयत्र समानं वक्र इति वा । अत्र साधयितुमिष्टैरन्वयादिभिः समं द्वेषेण अनभिमतवैरस्यार्थप्रकाशनात् शोभा ।

यत्र तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात्।
साध्यतेऽभिमतश्चार्थस्तदुदाहरणं मतम्॥
४३८॥ [ढ]

यथा।

"अनुयान्त्या जनातीतं कान्तं साधु त्वया कृतम्।
का दिनश्रीर्विनार्केण का निशा शशिना विना"॥ (ण)

हेतुर्वाक्यं समासोक्तमिष्टकृद्धेतुदर्शनात्॥
४३९॥ [त]

यथा वेण्यां भीमं प्रति चेटी। "एवं मए भणिदं? भाणुमदि! तुम्हाणं असुक्केसु केसेसु कधं अम्हाणं देवीए केसा संयमीअंतित्ति (२६)। (थ)

---

(२६) एवमिति। एवं मया भणितम् भानुमति! युष्माकम् असुक्तेषु केशेषु कथमस्माकं देव्याः केशाः संयम्यन्ते इति सं०।

---

(ढ) उदाहरणमाह। यत्रेति। यत्र तुल्यार्थयुक्तेन वाक्येन अभिप्रदर्शनात् दृष्टान्तरूपेण प्रदर्शनात् हेतोः अभिमतः इष्टः अर्थः साध्यते ज्ञाप्यते प्रकाश्यते इत्यर्थः तत् उदाहरणं मतम्।

(ण) उदाहरति अनुयान्त्येति। सीतां प्रति कस्याश्चित् उक्तिरियम्। जनातीतम्। अलोकसामान्यं कान्तं राममित्यर्थः अनुयान्त्या अनुगच्छन्त्या त्वया साधु कृतम्। तथाहि, अर्केण सूर्येण विना विरहिता इति भावः दिनश्रीः दिवसलक्ष्मीः का? शशिना चन्द्रेण विना विरहितेति भावः निशा रजनी का? अत्र तुल्यार्थयुक्तवाक्येन पतिविहीना योषिन्न शोभते इत्येवमभिमतार्थसाधनम्।

(त) हेतुमाह हेतुदर्शनात् कारणप्रदर्शनात् इष्टकृत् अभिमतार्थप्रकाशकं समासोक्तं संक्षिप्तं वाक्यं हेतुः।

(थ) उदाहरति यथेति। अत्र देव्याः केशसंयमनस्य हेतुः भानुमत्याः

**संशयो ज्ञाततत्त्वस्य**
**वाक्ये स्यादनिश्चयः ॥ ४४० ॥ [ द ]**

यथा ययातिविजये ।

"इयं स्वर्गाधिनाथस्य लक्ष्मीः किं यक्षकन्यका ।
किञ्चास्य विषयस्यैव देवता किमु पार्वती" ॥ (ध)

**दृष्टान्तो यस्तु पक्षार्थ-**
**साधनाय निदर्शनम् ॥ ४४१ ॥ [ न ]**

यथा वेण्यां भीमः । "आर्य्ये ! उचितमेवैतत् तस्याः यतो दुर्योधनकलत्रं हि सा" इत्यादि (प) ।

**तुल्यतर्को यदर्थेन**
**तर्कः प्रकृतगामिना ॥ ४४२ ॥ [ फ ]**

यथा तत्रैव ।

"प्रायेणैव हि दृश्यन्ते कामं स्वप्नाः शुभाशुभाः ।

---

केशासंयमः तत्प्रदर्शनेन दुर्योधनवधे सत्येव देव्याः केशसंयमनं भविष्यतीत्येव-मभिमतार्थः प्रकाश्यते ।

( द ) संशयमाह संशय इति । अज्ञाततत्त्वस्य तत्त्वमजानतो जनस्येत्यर्थः वाक्ये यत् अनिश्चयः अनिर्धारणं स संशयः स्यात् ।

( ध ) उदाहरति यथेति । अत्र नायिकायां ययातेरनिश्चयः ।

( न ) दृष्टान्तमाह दृष्टान्त इति । पक्षे अर्थस्य साध्यस्य साधनाय ज्ञापनाय यत् निदर्शनं स दृष्टान्तः ।

( प ) उदाहरति यथेति । तस्याः भानुमत्याः । अत्र द्रौपद्या भानुमती-कर्तृकः परिहासः साध्ये इति बोध्यम् ।

( फ ) तुल्यतर्कमाह तुल्यतर्क इति । प्रकृतगामिना प्रस्तुतानुसारिणा अर्थेन यत् तर्कः अर्थस्य ऊहनं स तुल्यतर्कः ।

भ्रातसङ्घा पुनरियं सानुजं स्पृशतीव माम्" ॥ (व)

सञ्चयोऽर्थानुरूपो यः
पदानां स पदोच्चयः ॥ ४४३ ॥ [भ]

शाकुन्तले यथा।

"अधरः किशलयरागः कोमलविटपानुकारिणौ बाहू।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम्" ॥

अत्र पदपदार्थयोः सौकुमार्य्यं सदृशमेव।

यथार्थानां प्रसिद्धानां क्रियते परिकीर्त्तनम्।
परपक्षव्युदासार्थं तन्निदर्शनमुच्यते ॥४४४॥ [म]

यथा।

"क्षत्रधर्मोचितैर्धर्मैरलं शत्रुबधे नृपाः।
किं नु बालिनि रामेण मुक्तो बाणः पराङ्मुखे" ॥ (य)

---

(व) उदाहरति यथेति। अत्र दुर्योधनादीनां भ्रातृणां भाविनिधनरूपार्थस्य सूचनम्।

(भ) पदोच्चयमाह सञ्चय इति। पदानाम् अर्थानुरूपः यः सञ्चयः समूहः स पदोच्चयः। अर्थानुरूप इत्यनेन सुकुमारार्थे सुकुमारार्थसूचकपदप्रयोगः उद्धतार्थे तत्सूचकपदप्रयोग इति बोध्यम्।

(म) निदर्शनमाह यथार्थानामिति। परपक्षः परमतं तस्य व्युदासार्थं निराकरणार्थं प्रसिद्धानां यथार्थानां सत्यरूपविषयाणां यत् परिकीर्त्तनं क्रियते तत् निदर्शनम्।

(य) उदाहरति यथेति। क्षत्रेति। अलं समर्थाः, अलं व्यर्थसमर्थयोरित्यमरः। किन्नु इति यथार्थे अव्ययं, मुक्तः त्यक्तः पराङ्मुखे अन्यासक्ते। अत्र क्षत्रियधर्मरूपस्य परपक्षस्य निराकरणाय प्रसिद्धस्य रामकर्तृकबालिहननरूपस्य अर्थस्य कीर्त्तनम्।

अभिप्रायस्तु सादृश्या-
दद्भुतार्थस्य कल्पना ॥ ४४५ ॥ [ र ]

यथा शाकुन्तले ।

"इदं किलाव्याजमनोहरं वपु-
स्तपःक्षमं साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्रधारया
शमीलतां छेत्तुमृषिर्व्यवस्यति" ॥ (ल)

ज्ञप्तिः केनचिदंशेन
किञ्चिद्यत्रानुमीयते ॥ ४४६ ॥ [ व ]

यथा मम प्रभावत्याम् ।

"अनेन खलु सर्वतश्चरता चञ्चरीकेणावश्यं विदिता भविष्यति प्रियतमा मे प्रभावती" (श) ।

विचारो युक्तवाक्यैर्य-
दप्रत्यक्षार्थसाधनम् ॥ ४४७ ॥ [ ष ]

---

( र ) अभिप्रायमाह अभिप्राय इति । सादृश्यात् साम्यात् अद्भुतस्य असम्भाविनः अर्थस्य कल्पना अभिप्रायः ।

( ल ) उदाहरति इदमिति । यः अव्याजमनोहरम् अकृत्रिममनोरञ्जनम् इदं वपुः शकुन्तलाशरीरमित्यर्थः तपःक्षमं तपश्चरणक्लेशसहं साधयितुं कर्तुम् इच्छति, स ऋषिः कण्व इत्यर्थः नीलोत्पलपत्रधारया शमीलताम् अतिकर्कशामिति भावः छेत्तुं व्यवस्यति उद्युङ्क्ते । वंशस्थविलं वृत्तम् । अत्र नीलोत्पलपत्रधारया शमीलताछेदनमिव शकुन्तलाशरीरेण तपश्चरणमसम्भवि ।

( व ) ज्ञप्तिमाह ज्ञप्तिरिति । केनचित् अंशेन प्रकारेण यत्र किञ्चित् अनुमीयते ज्ञायते सा ज्ञप्तिः ।

( श ) उदाहरति यथेति । चञ्चरीकेण भ्रमरेण । अत्र सर्वतश्चरता इति चिह्नरूपेण अंशेन प्रियतमाज्ञानानुमानम् ।

यथा मम चन्द्राकलायाम् "राजा। नूनमियमन्तः पिहित-मदनविकारा वर्त्तते। यतः।

हसति परितोषरहितं निरीक्ष्यमाणापि नेक्षते किञ्चित्।
सख्यामुदाहरन्त्यामसमञ्जसमुत्तरं दत्ते" ॥ (ख)

**देशकालस्वरूपेण**
**वर्णनादिष्टमुच्यते ॥ ४४८ ॥** [ छ ]

यथा वेण्यां सहदेवः।

"यद् वैद्युतमिव ज्योतिरार्य्ये क्रुद्धेऽद्य सम्भृतम्।
तत्प्रावृडिव कृष्णेयं नूनं संवर्द्धयिष्यति" ॥ (च)

**उपदिष्टं मनोहारि**
**वाक्यं शास्त्रानुसारतः ॥ ४४९ ॥** [क]

---

(घ) विचारमाह विचार इति। युक्तवाक्यैः युक्तियुक्तैः हेतुबोधकैरित्यर्थः वचनैः यत् अप्रत्यक्षस्य अदृष्टस्य अर्थस्य साधनं ज्ञापनं स विचारः।

(ख) उदाहरति यथेति। हसतीति। परितोषरहितम् असन्तोषं हसति, निरीक्ष्यमाणापि किञ्चित् न ईक्षते न पश्यति, तथा सख्याम् उदाहरन्त्याम् आलपन्त्याम् असमञ्जसम् अयोग्यम् उत्तरं दत्ते ददाति। अत्र अपरितोषहासादिरूपैर्हेतुमद्वचनैः अप्रत्यक्षस्य मनोविकारस्य साधनम्।

(छ) दिष्टमाह देशेति। देशकालस्वरूपेण देशकालयोः साधर्म्येण वर्णना रचना दिष्टम् उच्यते।

(च) उदाहरति यथेति। यदिति। अद्य क्रुद्धे आर्य्ये भीमसेने इति भावः वैद्युतमिव यत् ज्योतिः सम्भृतं समुत्थितं तत् इयं कृष्णा द्रौपदी प्रावृट् वर्षाकाल इव नूनं निश्चितं संवर्द्धयिष्यति। देशकालानुरूपवर्णनम्।

(क) उपदिष्टमाह उपदिष्टमिति। शास्त्रानुसारतः यथाशास्त्रं मनोरञ्जनकृत् वाक्यम् उपदिष्टम् उपदेशवचनमित्यर्थः।

यथा शाकुन्तले ।

"शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने ।
भर्त्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः" ॥ इत्यादि । (ख)

गुणातिपातः कार्य्यं यद्
विपरीतं गुणान् प्रति ॥ ४५० ॥ [ग]

यथा मम चन्द्रकलायां चन्द्रं प्रति । "जइ संहरिज्जइ तमो घेप्पइ सअलेहिं ते पाओ वससि सिरसि पसुवइणो तहवि इत्थीण जीअणं हरसि" (२७) । (घ)

यः सामान्यगुणोद्रेकः
स गुणातिशयो मतः ॥ ४५१ ॥ [ङ]

यथा तत्रैव राजा चन्द्रकलाया मुखं निर्दिश्य ।

"असावन्तश्चञ्चद्विकचनवलीलाब्जयुगल-
स्तलस्फूर्जत्कम्बुर्विलसदलिसङ्घात उपरि ।

---

(२७) जइ इति । यदि संह्रियते तमो गृह्यते सकलैस्ते पादः वससि शिरसि पशुपतेस्तथापि स्त्रिया जीवनं हरसि इति सं० ।

---

(ख) उदाहरति यथेति । अत्र गुरुशुश्रूषादिकं शास्त्रानुसारि सनीत्यादि वचनम् ।

(ग) गुणातिपातमाह गुणातिपात इति । गुणान् प्रति यत् विपरीतं कार्य्यं गुणविरोधिकार्य्यमित्यर्थः स गुणातिपातः ।

(घ) उदाहरति यथेति । अत्र तमोहरणादिगुणानां विपरीतं स्त्रीजन-जीवनहरणम् ।

(ङ) गुणातिशयमाह य इति । यः सामान्यगुणेभ्यः उपमानोपमेयसाधा-रणधर्मेभ्यः उद्रेकः आधिक्यम् उपमेयस्येति शेषः स गुणातिशयः मतः कथितः ।

विना दोषासङ्गं सततपरिपूर्णाखिलकलः
कुतः प्राप्तश्चन्द्रो विगलितकलङ्कः सुमुखि! ते" ॥ (च)

अर्थान् सिद्धान् बहूनुक्त्वा
विशेषोक्तिर्विशेषणम् ॥ ४५२ ॥ [छ]

यथा।

"तृष्णापहारी विमलो द्विजावासो जनप्रियः।
ह्रदः पद्माकरः किन्तु बुधस्त्वं स जडाशयः" ॥ (ज)

पूर्वसिद्धार्थकथनं
निरुक्तिरिति कीर्त्तितम् ॥ ४५३ ॥ [झ]

---

(च) उदाहरति यथेति। असाविति। हे सुमुखि! ते त्वया अन्तः अभ्यन्तरे अञ्चत् स्फुरत् विकचं विकसितं नवं लीलाजयुगलं क्रीड़ापद्मद्वयं यस्य तादृशः, तले स्फूर्जन् विकसन् कम्बुः शङ्खः यस्य तथाविधः, उपरि विलसन्तः विचरन्तः अलीनां भ्रमराणां सङ्घाताः समूहाः यस्य तथाभूतः, सततं पौर्णमासी-व्यतिरिक्तेऽपि काले इत्यर्थः परिपूर्णा अखिला समग्रा कला यस्य तथोक्तः, विगलितकलङ्कः निष्कलङ्कः असौ चन्द्रः दोषा रात्रिः तस्याः सङ्गं सम्पर्कं विना रात्रिमन्तरेणेत्यर्थः कुतः कस्मात् प्राप्तः? कलाशब्देन चतुःषष्टिविद्याश्च लभ्यन्ते, ततश्च दोषाणामासङ्गं विना सकलविद्यालाभः असम्भव इति ध्वनिः। अत्र उपमेयस्य मुखादेः आह्लादकत्वादिसाधारणधर्मेभ्यः चन्द्रादेराधिक्यम्।

(छ) विशेषणमाह अर्थानिति। सिद्धान् प्रसिद्धान् बहून् अर्थान् उक्त्वा विशेषेण उक्तिः भेदकथनमित्यर्थः विशेषणम्।

(ज) उदाहरति यथेति। तृष्णेति। विद्वांसं धनिनं प्रत्युक्तिः। ह्रदः त्वञ्च तुल्य इति शेषः। तथाहि, तृष्णा जलपानेच्छा धनाशा च तस्याः अपहारी नाशकः जलदानेन धनदानेन च इति भावः, विमलः स्वच्छः निर्दोषश्च, द्विजावासः। द्विजानां पक्षिणां जलचराणां हंसादीनां ब्राह्मणानाञ्च आवासः आश्रयः, जनानां प्रियः सन्तोषकरः, पद्माकरः पद्मानां कमलानाम् आकरः उत्पत्तिस्थानं पद्मायाः लक्ष्म्याः आकरः आवासः धनवानित्यर्थश्च किन्तु त्वं बुधः विद्वान्, स ह्रदः जड़ाशयः जड़स्य जाड्यगुणस्य आशयः स्थानम्। अत्र बहून् समानधर्मानुक्त्वा बुधत्वजड़ाशयत्वाभ्यां भेदकथनम्।

यथा वेण्याम् । "निहताशेषकौरव्यः" इत्यादि (ञ) ।

बहूनां कीर्त्तनं सिद्धि-
रभिप्रेतार्थसिद्धये ॥ ४५४ ॥ [ ट ]

"यद्वीर्य्यं कूर्मराजस्य यच्च शेषस्य विक्रमः ।
पृथिव्या रक्षणे राजन्नेकत्र त्वयि तत् स्थितम्" ॥ (ठ)

दृप्तादीनां भवेद् भ्रंशो
वाच्यादन्यतरद्वचः ॥ ४५५ ॥ [ ड ]

वेण्यां कञ्चुकिनं प्रति दुर्य्योधनः ।

"सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम् ।
स्वबलेन निहन्ति संयुगे न चिरात्पाण्डुसुतः सुयोधनम्" ॥ (ढ)

विचारस्यान्यथाभावः
सन्देहात् तु विपर्य्ययः ॥ ४५६ ॥ [ ण ]

---

(झ) निरुक्तिमाह पूर्वेति । पूर्वसिद्धानां पूर्वं निष्पन्नानाम्, अर्थानां कथनं निरुक्तिरिति कीर्त्तितम् ।

(ञ) उदाहरति यथेति । अत्र कौरव्यादिहननस्य पूर्वसिद्धस्य कथनम् ।

(ट) सिद्धिमाह बहूनामिति । अभिप्रेतस्य इष्टस्य अर्थस्य सिद्धये निष्पत्तये बोधायेत्यर्थः बहूनाम् अनेकेषामित्यर्थः कीर्त्तनं कथनं सिद्धिः ।

(ठ) उदाहरति यदिति । हे राजन् ! कूर्मराजस्य शेषधारिणः कच्छपाधिपतेः यत् वीर्य्यं बलं यच्च शेषस्य अनन्तस्य विक्रमः वीर्य्यमित्यर्थः तदुभयं पृथिव्याः रक्षणे पालनविषये एकत्र एकस्मिन् त्वयि स्थितम् । अत्र अभिप्रेतस्य राज्ञः पृथ्वीभारसहिष्णुतातिशयस्य बोधः ।

(ड) भ्रंशमाह दृप्तादीनामिति । दृप्तादीनाम् आदिपदेन दुष्टदुःखितादेः ग्रहणम्, अहङ्कृतदुष्टदुःखितादीनामित्यर्थः वाच्यात् विवक्षितादित्यर्थः अन्यतरत् यत् वचः, स भ्रंशः भवेत् ।

(ढ) उदाहरति सहभृत्यगणमिति । अत्र चिरादपि न हन्तीति विवक्षितं किन्तु न चिरात् हन्तीति अन्यथाभूतम् ।

यथा।

"मत्वा लोकमदातारं सन्तोषे यैः कृता मतिः।
त्वयि राजनि ते राजन्! न तथा व्यवसायिनः"॥ (त)

दाक्षिण्यं चेष्टया वाचा
परचित्तानुवर्त्तनम्॥ ४५७॥ [थ]

वाचा यथा।

"प्रसाधय पुरीं लङ्कां राजा त्वं हि विभीषण!।
आर्य्येणानुगृहीतस्य न विघ्नः सिद्धिमन्तरा"॥ (द)

वाक्यैः स्निग्धैरनुनयो
भवेदर्थस्य साधनम्॥ ४५८॥ [ध]

---

(ण) विपर्य्ययमाह विचारेति। सन्देहात् संशयात् विचारस्य अन्यथाभावः विपर्य्ययः।

(त) उदाहरति मत्वेति। लोकं जगतीस्थम् अदातारम् अवदान्यं मत्वा यैः सन्तोषे मतिः कृता सन्तुष्टैरेव स्थितं न कुत्रापि याचितुं गतमिति भावः। हे राजन्! त्वयि राजनि सति ते तथा व्यवसायिनः तादृशाचारवन्तः न भवन्तीति शेषः सन्तोषमवलम्ब्य न तिष्ठन्तीति भावः। अत्र पूर्वं दातृत्वाभावस्य निश्चयो जात इदानीं त्वयि राज्ञि तन्निश्चयाभाव एव अविचार इति बोध्यम्।

(थ) दाक्षिण्यमाह दाक्षिण्यमिति। चेष्टया शारीरव्यापारेण वाचा च परचित्तस्य अनुवर्त्तनम् अनुसरणम् अनुरञ्जनमित्यर्थः दाक्षिण्यम्।

(द) उदाहरति प्रसाधयेति। हे विभीषण! लङ्कां पुरीं प्रसाधय अलङ्कुरु, हि यतस्त्वं राजा इदानीमसीति शेषः, आर्य्येण रामेण अनुगृहीतस्य जनस्य सिद्धिम् अन्तरा विना न विघ्नः स्यादिति शेषः। विभीषणं प्रति लक्ष्मणस्योक्तिः। अत्र वाचा विभीषणचित्तानुवर्त्तनम्।

(ध) अनुनयमाह वाक्यैरिति। स्निग्धैः स्नेहयुक्तैः वाक्यैः अर्थस्य कार्य्यस्य साधनम् अनुनयः।

एवं चेष्टयापि।

यथा वेणाम् अश्वत्थामानं प्रति कृपः। "दिव्यास्त्रग्राम-कोविदे भारद्वाजतुल्यपराक्रमे किं न सम्भाव्यते त्वयि" (न)।

**माला स्याद् यदभीष्टार्थं**
**नैकार्थप्रतिपादनम् ॥ ४५९ ॥ [प]**

यथा शाकुन्तले राजा।

"किं शीतलैः क्लमविरोधिभिरार्द्रवातं,
सञ्चारयामि नलिनीदलतालवृन्तैः।
अङ्के निवेश्य चरणावुत पद्मताम्रौ,
संवाहयामि करभोरु! यथासुखं ते" ॥ (फ)

**अर्थापत्तिर्यदन्यार्थो-**
**ऽर्थान्तरोक्तेः प्रतीयते ॥ ४६० ॥ [ब]**

---

(न) उदाहरति यथेति। दिव्यास्त्राणां ग्रामः समूहः तस्मिन् कोविदः विचक्षणः तस्मिन् भारद्वाजो भरद्वाजस्य अपत्यं पुमान् द्रोण इत्यर्थः तस्य तुल्यः पराक्रमः यस्य तादृशे। अत्र स्निग्धवाक्येन अश्वत्थाम्नः सन्तोषरूपस्य कार्यस्य साधनम्।

(प) मालामाह मालेति। अभीष्टार्थम् इष्टसम्पादनाय इत्यर्थः यत् नैकार्थप्रतिपादनम् अनेकार्थप्रकटनं सा माला स्यात्।

(फ) उदाहरति। किमिति। हे करभोरु! शीतलैः क्लमविनोदिभिः श्रान्तिनिवारकैरित्यर्थः नलिनीदलतालवृन्तैः पद्मपत्ररूपव्यजनैः आर्द्रवातं सञ्चालयामि किम्? उत अथवा पद्मताम्रौ ते तव चरणौ अङ्के क्रोडे निवेश्य निधाय यथासुखं संवाहयामि। वसन्ततिलकं वृत्तम्। अत्र अभीष्टस्य शकुन्तलापरितोषस्य साधनाय वातसञ्चारणादीनामनेकार्थानां प्रतिपादनम्।

(ब) अर्थापत्तिमाह अर्थापत्तिरिति। अर्थान्तरस्य उक्तेः हेतोः यत् अन्यार्थः प्रतीयते सा अर्थापत्तिः।

यथा वेख्याम् । द्रोणोऽश्वत्थामानं राज्येऽभिषेक्तुमिच्छतीति कथयन्तं कर्णं प्रति "राजा । साधु अङ्गराज ! साधु । कथमन्यथा ।

दत्ताभयं सोऽतिरथो वध्यमानं किरीटिना ।
सिन्धुराजमुपेक्षेत नैवं चेत्कथमन्यथा" ॥ (भ)

**दूषणोद्घोषणायां तु**
**भर्त्सना गर्हणं तु तत् ॥ ४६१ ॥ [ म ]**

यथा तत्रैव कर्णं प्रति "अश्वत्थामा । निर्वीर्य्यं गुरुशापभाषितवशात् किं मे तवेवायुधम्" इत्यादि (य) ।

**अभ्यर्थनापरैर्वाक्यैः**
**पृच्छाऽर्थान्वेषणं मतम् ॥ ४६२ ॥ [ र ]**

यथा तत्रैव सुन्दरकः । "अज्जा ! अज्ज अवि णाम सारधिदुदिओ दिट्ठो तुम्हेहिं महाराओ दुय्योधण ण वेत्ति" (२८) । (ल)

---

(२८) अज्जेति । आर्य्याः ! अद्य अपि नाम सारथिद्वितीयो दृष्टो युष्माभिः महाराजो दुर्य्योधनो न वा इति सं० ।

---

(भ) उदाहरति यथेति । दत्ताभयमिति । नैवं चेत् यद्येवं न स्यादित्यर्थः अन्यथा अतिरथः सः द्रोणः दत्ताभयं दत्तम् अभयं यस्मै तादृशं पूर्व्वंयुष्मांस्त्वाम् अर्जुनो वधीदिति अभयं दत्त्वापीत्यर्थः किरीटिना अर्जुनेन वध्यमानं हन्यमानं सिन्धुराजं जयद्रथम् उपेक्षेत । अत्र कर्णोक्तिरूपात् अन्यार्थस्य सिन्धुराजोपेक्षारूपस्य प्रतीतिः ।

(म) गर्हणमाह दूषणेति । दूषणस्य उद्घोषणायां या भर्त्सना तत् गर्हणम् ।

(य) उदाहरति यथेति । अत्र अश्वत्थामकर्त्तृका कर्णभर्त्सना ।

(र) पृच्छामाह पृच्छेति । अभ्यर्थनापरैः प्रार्थनासूचकैः वाक्यैः अर्थानाम् अन्वेषणं पृच्छा मतम् ।

प्रसिद्धिर्लोकसिद्धार्थै-
रुत्कृष्टैरर्थसाधनम् ॥ ४६३ ॥ [ व ]

यथा विक्रमोर्वश्यां "राजा ।

सूर्य्याचन्द्रमसौ यस्य मातामहपितामहौ ।
स्वयं वृतः पतिर्द्वाभ्यामुर्वश्या च भुवा च यः" ॥ (श)

सारूप्यमभिभूतस्य
सारूप्यात् क्षोभवर्त्तनम् ॥ ४६४ ॥ [ ष ]

यथा वेण्याम् । दुर्य्योधनभ्रान्त्या भीमं प्रति युधिष्ठिरः । "दुरात्मन् ! दुर्य्योधनहतक !" इत्यादि (स) ।

संक्षेपो यत् तु संक्षेपा-
दात्मान्यार्थे प्रयुज्यते ॥ ४६५ ॥ [ ह ]

यथा मम चन्द्रकलायाम् । "राजा । प्रिये !

---

(ल) उदाहरति यथेति । अत्र प्रार्थनासूचकवाक्येन दुर्य्योधनान्वेषणम् ।

(व) प्रसिद्धिमाह प्रसिद्धिरिति । उत्कृष्टैः लोकसिद्धैः लोकप्रसिद्धैः अर्थैः अर्थस्य कार्य्यस्य साधनं प्रसिद्धिः ।

(श) उदाहरति यथेति । अत्र लोकप्रसिद्धैः सूर्य्यचन्द्रवंशीयत्वादिभिः आत्मपरिचयरूपस्य अर्थस्य साधनम् ।

(ष) सारूप्यमाह सारूप्यमिति । सारूप्यात् समानरूपत्वात् अभिभूतस्य अभिभवं प्राप्तस्य यत् क्षोभेण वर्त्तनं व्यवहारः सारूप्यम् ।

(स) उदाहरति यथेति । अत्र सादृश्येनाभिभूतस्य युधिष्ठिरस्य क्षोभ-वर्त्तनम् ।

(ह) संक्षेपमाह संक्षेप इति । संक्षेपात् साधारण्याद् अन्यार्थे अन्यस्य रूपे कार्य्ये यत् आत्मा प्रयुज्यते नियुज्यते स संक्षेपः ।

(क्ष) उदाहरति यथेति । शिरीषकुसुमवत् परिपेलवानि सुकोमलानि

अङ्गानि खेदयसि किं शिरीषकुसुमपरिपेलवानि सुधा"। (ञ)

आत्मानं निर्दिश्य।

"अयमीहितकुसुमानां सम्पादयिता तवास्ति दासजनः"॥

**गुणानां कीर्त्तनं यत्तु**

**तदेव गुणकीर्त्तनम्** ॥ ४६६ ॥ [क]

यथा तत्रैव। "नेत्रे खञ्जन इत्यादि" (ख)।

**स लेशो भण्यते वाक्यं**

**यत्साद्दृश्यपुरःसरम्** ॥ ४६७ ॥ [ग]

यथा वेण्यां "राजा।

हते जरति गाङ्गेये पुरस्कृत्य शिखण्डिनम्।

या श्लाघा पाण्डुपुत्राणां सैवास्माकं भविष्यति"॥ (घ)

**मनोरथस्त्वभिप्राय-**

**स्योक्तिर्भङ्ग्यन्तरेण यत्** ॥ ४६८ ॥ [ङ]

---

अङ्गानि किं कथं सुधा मृषा खेदयसि क्लेशयसि? अयं दासजनः तव ईप्सित-कुसुमानाम् अभीष्टपुष्पाणां सम्पादयिता यत्ते अभीष्टं तत् दास एव सम्पादयति किं तव आयासेनेति भावः। अत्र चन्द्रकलापरिचर्य्यार्थं राज्ञ आत्मनियोगः।

(क) गुणकीर्त्तनमाह गुणानामिति। स्पष्टम्।

(ख) उदाहरति यथेति व्याख्यातं प्राक्। अत्र नायिकाया रूपगुणानां कथनम्।

(ग) लेशमाह स इति। सादृश्यपुरःसरं यत् वाक्यं भण्यते कथ्यते स लेशः।

(घ) उदाहरति यथेति। शिखण्डिनं पुरस्कृत्य अग्रेकृत्य जरति वृद्धे गाङ्गेये भीष्मे हते अर्जुनेनेति शेषः पाण्डुपुत्राणां या श्लाघा गौरवम् अस्माकं सैव श्लाघा भविष्यति अभिमन्युवधे इति शेषः। अत्र अभिमन्युवधः भीष्मवधतुल्य इति सादृश्यम्।

यथा।

"रतिकेलिकलः किञ्चिदेष मन्मथमन्थरः।
पश्य सुभ्रु! समाश्वस्तां कादम्बश्चुम्बति प्रियाम्" ॥ (च)

विशेषार्थोऽतिविस्तारो-
ऽनुक्तसिद्धिरुदीर्य्यते ॥ ४६९ ॥ [छ]

यथा गृहवृक्षवाटिकायाम्।

"दृश्येते तन्वि! यावेतौ चारुचन्द्रमसं प्रति।
प्राज्ञे कल्याणनामानावुभौ तिष्यपुनर्वसू" ॥ (ज)

स्यात् प्रसादयितुं पूज्यं
प्रियोक्तिर्हर्षभाषणम् ॥ ४७० ॥ [झ]

---

(ङ) मनोरथमाह मनोरथ इति। भङ्ग्यन्तरेण भङ्गिविशेषेण यत् अभिप्रायस्य उक्तिः, स मनोरथः।

(च) उदाहरति। यथेति। नायिकां प्रति कस्याचिदुक्तिः। हे सुभ्रु! पश्य एषः मन्मथमन्थरः मदनपरवशः अतएव रतिकेलौ सुरतविहारे कलः मधुरवाक् कादम्बः कलहंसः किञ्चित् ईषत् समाश्वस्तां सान्त्वितां प्रलोभनेन कामावेशं नीतामिति भावः प्रियां चुम्बति। अत्र कादम्बचुम्बनरूपभङ्ग्या स्वाभिप्रेतस्य स्वकान्ताचुम्बनस्य उक्तिः।

(छ) अनुक्तसिद्धिमाह विशेषार्थ इति। विशेषः रूपलावण्यातिशयः अर्थः प्रयोजनं यस्य तादृशः अतिविस्तारः अत्युक्तिः अनुक्तसिद्धिः उदीर्य्यते कथ्यते।

(ज) उदाहरति। यथेति। सविश्वामित्रौ रामलक्ष्मणौ दृष्ट्वा सीतां प्रति तत्सखीनामुक्तिः। हे तन्वि! कृशाङ्गि! चारुचन्द्रमसं मनोहरचन्द्रं प्रति चन्द्रसमीपे इत्यर्थः यौ एतौ दृश्येते। हे प्राज्ञे! विदुषि! एतौ उभौ कल्याणनामानौ शुभाभिधौ तिष्यपुनर्वसू तदाख्यनक्षत्रभेदौ। अत्र रूपलावण्यातिशयात् विश्वामित्ररामलक्ष्मणानां चन्द्रतिष्यपुनर्वसुत्वेन अत्युक्तिः।

यथा शाकुन्तले।

"उदेति पूर्वं कुसुमं ततः फलं
घनोदयः प्राक् तदनन्तरं पयः।
निमित्तनैमित्तिकयोरयं विधिः
तव प्रसादस्य पुरस्तु सम्पदः" ॥ (ञ)

अथ नाट्यालङ्काराः।

आशीराक्रन्दकपटाक्षमागर्वोद्यमाश्रयाः।
उत्प्रासनं स्पृहाक्षोभपश्चात्तापोपपत्तयः॥
आशंसाध्यवसायौ च विसर्पोल्लेखसंज्ञितौ।
उत्तेजनं परीवादो नीतिरर्थविशेषणम्॥
प्रोत्साहनञ्च साहाय्यमभिमानोऽनुवर्त्तनम्।
उत्कीर्त्तनं तथा याञ्चा परीहारो निवेदनम्॥
प्रवर्त्तनाख्यानयुक्तिप्रहर्षाश्चोपदेशनम्।
इति नाट्यालङ्कृतयो नाट्यभूषणहेतवः॥ [ट]

---

(झ) प्रियोक्तिमाह स्यादिति। पूज्यं जनं प्रसादयितुं यत् हर्षप्रकाशकं सा प्रियोक्तिः स्यात्।

(ञ) उदाहरति यथेति। पूर्वं प्रथमं फलोत्पत्तेः प्रागित्यर्थः कुसुमम् उदेति उदयं प्राप्नोति, ततः अनन्तरं कुसुमोदयात् परमित्यर्थः फलम् उदेतीत्यनेनान्वयः। प्राक् वृष्टेरिति शेषः घनानां मेघानाम् उदयः, तदनन्तरं मेघोदयात्परं पयः जलं वृष्टिरित्यर्थः। निमित्तनैमित्तिकयोः कारणकार्य्ययोः अयं विधिः नियमः, तव प्रसादस्य अनुग्रहस्य पुरः अग्रतस्तु अनुग्रहात् प्रागित्यर्थः सम्पदः समृद्धयः भवन्तीति शेषः। वंशस्थविलं वृत्तम्। अत्र अनुग्रहसम्पदः कारणत्वात् पूर्वमेव कार्य्यन्तु सम्पद तत्पश्चात् भवितुं युज्यते, तद्वैपरीत्येन तु पूज्यस्यातिप्रभावशालित्व-ख्यापनेन हर्षोत्पादनरूपा प्रियोक्तिः

**आशीरिष्टजनाशंसा ॥ ४७१ ॥ [ ठ ]**

यथा शाकुन्तले।

"ययातेरिव शर्मिष्ठा पत्युर्बहुमता भव।
पुत्रं त्वमपि सम्राजं सेव पूरुमवाप्नुहि" ॥ (ड)

**आक्रन्दः प्रलपितं शुचा ॥ ४७२ ॥ [ ढ ]**

यथा वेण्याम् "कञ्चुकी। हा देवि! कुन्ति! राजभवनपताके!" इत्यादि (ण)।

**कपटं मायया यत्र**
**रूपमन्यद्विभाव्यते ॥ ४७३ ॥ [ त ]**

यथा कुलपत्यङ्के।

"मृगरूपं परित्यज्य विधाय कपटं वपुः।
नीयते रक्षसा तेन लक्ष्मणो युधि संशयम्" ॥ (थ)

---

(ट) नाट्यालङ्कारानाह अथेति। आशीःप्रभृतीनि त्रयस्त्रिंशत् नाट्यालङ्कारा इत्यर्थः।

(ठ) आशिषमाह आशीरिति। इष्टजनस्य आशंसा इष्टलाभाशंसनम्।

(ड) उदाहरति यथेति। ययातेरिति। शर्मिष्ठा वृषपर्वसुता ययातेरिव त्वं पत्युः दुष्मन्तस्य बहुमता बहु आदरणीया भव। सा शर्मिष्ठा पूरुमिव त्वमपि सम्राजं चक्रवर्त्तिनं पुत्रम् आप्नुहि लभस्व। अत्र शकुन्तलां प्रति कण्वस्य शुभाशंसनम्।

(ढ) आक्रन्दमाह आक्रन्द इति। शुचा शोकेन प्रलपितं प्रलापः आक्रन्दः।

(ण) उदाहरति यथेति। स्पष्टम्।

(त) कपटमाह कपटमिति। यत्र मायया छलेन अन्यत् रूपं विभाव्यते प्रदर्श्यते तत् कपटम्।

(थ) उदाहरति यथेति। मृगरूपमिति। तेन रक्षसा मारीचेन मृगरूपं काञ्चनहरिणकायं परित्यज्य कपटं वपुः शरीरं विधाय लक्ष्मणः युधि युद्धे संशयं नीयते प्राप्यते। अत्र मायया अन्यरूपग्रहणम्।

**अक्षमा सा परिभवः**

**स्वल्पोऽपि नाभिसह्यते ॥ ४७४ ॥ [ द ]**

यथा शाकुन्तले। "राजा। भोः सत्यवादिन्! अभ्युपगतं तावदस्माभिः। किं पुनरिमामभिसन्धाय लभ्यते। शार्ङ्गरवः। विनिपातः" इत्यादि (ध)।

**गर्वोऽवलेपजं वाक्यम् ॥ ४७५ ॥ [ न ]**

यथा तत्रैव। "राजा। ममापि नाम सत्त्वैरभिभूयन्ते गृहाः" (प)।

**कार्य्यस्यारम्भ उद्यमः ॥ ४७६ ॥ [ फ ]**

यथा कुम्भे। "रावणः। पश्यामि शोकविवशोऽन्तकमेव तावत्" (ब)।

**ग्रहणं गुणवत् कार्य्य-**

**हेतोराश्रय उच्यते ॥ ४७७ ॥ [ भ ]**

---

( द ) अक्षमामाह अक्षमेति। स्वल्पः अत्यल्पः अपि परिभवः यत् न अभिसह्यते सा अक्षमा।

( ध ) उदाहरति यथेति। शार्ङ्गरवं प्रति राज्ञ उक्तिः। अभ्युपगतं स्वीकृतम्। इमां शकुन्तलाम् अभिसन्धाय प्रतार्य्य। अत्र सत्यवादिन्नित्यनेन सोल्लुण्ठनसम्बोधनेन परिभूतस्य शार्ङ्गरवस्य विनिपात इति वचनेन अक्षमा प्रकटिता।

( न ) गर्वमाह गर्व इति। अवलेपजं साहङ्कारं वाक्यं गर्वः।

( प ) उदाहरति यथेति। अत्र ममापीत्यनेन राज्ञः गर्वातिशयः सूचितः।

( फ ) उद्यममाह कार्य्यस्येति। स्पष्टम्।

( ब ) उदाहरति यथेति। शोकविवशः अतिशोकार्त्तः बहुपुत्रभ्रातृबन्धुवर्गनाशादिति भावः अन्तकमेव यममेव तावत् पश्यामि। अत्र रणकर्मणः उद्यमः सूचितः।

यथा विभीषणनिर्भर्त्सनाङ्के। "विभीषणः। राममेवाश्रयिष्यामि" इति (म)।

उत्प्रासनन्तूपहासो
योऽसाधौ साधुमानिनि ॥ ४७८ ॥ [य]

यथा शाकुन्तले। "शार्ङ्गरवः। राजन्! अथ पुनः पूर्ववृत्तान्तः व्यासङ्गाद्विस्मृतो भवान् तत्कथमधर्मभीरोर्दारपरित्यागः" इत्यादि (र)।

आकाङ्क्षा रमणीयत्वाद्
वस्तुनो या स्पृहा तु सा ॥ ४७९ ॥ [ल]

यथा तत्रैव। "राजा।

चारुणा स्फुरितेनायमपरिक्षतकोमलः।
पिपासतो ममानुज्ञां ददातीव प्रियाधरः" ॥ (व)

---

(भ) आश्रयमाह ग्रहणमिति। कार्य्यहेतोः गुणवत् उत्कृष्टं ग्रहणम् आश्रयः उच्यते।

(म) उदाहरति यथेति। स्पष्टम्। अत्र राज्यार्थं रामाश्रयणं गुणवत्।

(य) उत्प्रासनमाह उत्प्रासनमिति। आत्मानं साधु मन्यते इति साधुमानी तस्मिन् असाधौ यः उपहासः उत्प्रासनम्।

(र) उदाहरति यथेति। पूर्ववृत्तान्तः शकुन्तलापरिणयरूपा पूर्वघटनेत्यर्थः व्यासङ्गात् भार्य्यान्तरसंसर्गात्। अत्र अधर्मभीरोरिति उपहासः।

(ल) स्पृहामाह आकाङ्क्षेति। वस्तुनः विषयस्य रमणीयत्वात् मनोहरत्वात् या आकाङ्क्षा तत्प्राप्तीच्छा इत्यर्थः सा स्पृहा।

(व) उदाहरति यथेति। चारुणेति। चारुणा मनोहरेण स्फुरितेन स्फुरणेन अपरिक्षतः केनापि अदष्टत्वात् अग्रथितः अतएव कोमलः प्रियायाः अयम् अधरः पिपासतः पातुमिच्छतः मम अनुज्ञां ददातीव। अत्र अधरस्य रमणीयवस्तुत्वात् पिपासा।

अधिक्षेपवचःकारी
क्षोभः प्रोक्तः स एव तु ॥ ४८० ॥ [श]

यथा।

"त्वया तपस्विचाण्डाल ! प्रच्छन्नवधवर्त्तिना।
न केवलं हतो बाली स्वात्मा च परलोकतः" ॥ (ष)

मोहावधीरितार्थस्य
पश्चात्तापः स एव तु ॥ ४८१ ॥ [ स ]

यथाऽनुतापाङ्के। "रामः। किं देव्या न विचुम्बितोऽवहुशो मिथ्याभिशप्तस्तदा" इति (ह)।

उपपत्तिर्मता हेतो-
रुपन्यासोऽर्थसिद्धये॥ ४८२ ॥ [च]

---

(श) क्षोभमाह अधिक्षेपवच इति। अधिक्षेपवचः भर्त्सनवाक्यं करोतीति तथोक्तः क्षोभः मनोविकारविशेषः स एव क्षोभ एव प्रोक्तः।

(ष) उदाहरति त्वयेति। रामं प्रति बालिन उक्तिः। हे तपस्विचाण्डाल ! तपस्विषु चाण्डालवत् नृशंसकर्मिन्नित्यर्थः प्रच्छन्नवधवर्त्तिना गुप्तभावेन स्थित्वा हिंसाकारिणा त्वया बाली केवलं न हतः परलोकतः आत्माऽपि हत इत्यर्थः, यादृशं दुष्कार्य्यं त्वया कृतम् एतेन परलोके तव निस्तारो नास्तीति भावः। अत्र भर्त्सनकारित्वोभः।

(स) मोहेति। मोहेन अनवधानतया इत्यर्थः वा अज्ञानेन अवधीरितस्य अवज्ञातस्य अर्थस्य विषयस्य यः पश्चात्तापः स एव पश्चात्ताप एव।

(ह) उदाहरति यथेति। विबत इति। देव्या सीतया मिथ्याभिशप्तः मिथ्यादत्तपरिवादः। अत्र चुम्बनरूपस्य अर्थस्य अवधीरणात् पश्चात्तापः।

(च) उपपत्तिमाह उपपत्तिरिति। अर्थस्य कार्य्यस्य सिद्धये हेतोः कारणस्य उपन्यासः कीर्त्तनम् उपपत्तिर्मता।

यथा वध्यशिलायाम्।

"म्रियते म्रियमाणे या त्वयि जीवति जीवति।
तां यदीच्छसि जीवन्तीं रक्षात्मानं ममाऽसुभिः"॥ (क)

**आशंसनं स्यादाशंसा** ॥ ४८३ ॥ [ख]

यथा श्मशाने "माधवः। तत्पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखम्" इति (ग)।

**प्रतिज्ञाध्यवसायकः** ॥ ४८४ ॥ [घ]

यथा मम प्रभावत्यां वज्रनाभः।

"अस्य वक्षः क्षणेनैव निर्मथ्य गदयानया।
लीलयोन्मूलयाम्येव भुवनद्वयमद्य वः"॥ (ङ)

**विसर्पो यत् समारब्धं**
**कर्मानिष्टफलप्रदम्** ॥ ४८५ ॥ [च]

यथा वेण्याम्। "एकस्य तावत् पाकोऽयम्" इत्यादि (छ)।

---

(क) उदाहरति यथेति। त्वयि म्रियमाणे या म्रियते, त्वयि जीवति या जीवति, यदि तां जीवन्तीम् इच्छसि तदा मम असुभिः प्राणैः आत्मानं रक्ष। अत्र तस्या जीवनरक्षणरूपस्य अर्थस्य सिद्धिहेतुस्तव शरीररक्षणम्।

(ख) आशंसामाह आशंसनमिति। आशंसनम् अभीष्टलाभे मनसो व्यापारणम्।

(ग) उदाहरति यथेति। तस्याः मालत्याः।

(घ) अध्यवसायमाह प्रतिज्ञेति। प्रतिज्ञा कार्य्यस्य कर्त्तव्यत्वेन दृढतरनिर्देश इत्यर्थः अध्यवसायः।

(ङ) उदाहरति यथेति। अत्र वज्रनाभस्य भुवनद्वयोन्मूलने प्रतिज्ञा।

(च) विसर्पमाह विसर्प इति। अनिष्टफलप्रदं यत् कर्म समारब्धं प्रक्रान्तं स विसर्पः।

(छ) उदाहरति यथेति। एकस्य द्रौपदीकेशपक्षस्य पाकः फलं संग्रामे बहुराजन्यनिधनरूपमिति भावः। अत्र केशपक्षणम् अनिष्टफलप्रदं कर्म।

**कार्य्यग्रहणमुल्लेखः** ॥ ४८६ ॥ [ज]

यथा शाकुन्तले । राजानं प्रति "तापसौ । समिदाहरणाय प्रस्थितावावाम् । इह च अस्मद्गुरोः कण्वस्य साधिदैवत इव शकुन्तलया अनुमालिनीतीरमाश्रमो दृश्यते । न चेदन्यः कार्य्यातिपातः प्रविश्य गृह्यतामतिथिसत्कारः" इति (झ) ।

**उत्तेजनमितीष्यते ।**

**स्वकार्य्यसिद्धयेऽन्यस्य**
**प्रेरणाय कठोरवाक्** ॥ ४८७ ॥ [ञ]

यथा ।

"इन्द्रजित्चण्डवीर्य्योऽसि नाम्नैव बलवानसि ।
धिक् ! धिक् ! प्रच्छन्नरूपेण युध्यसेऽस्मद्भयाकुलः ॥ (ट)

---

( ज ) उल्लेखमाह कार्य्यग्रहणमिति । कार्य्यस्य ग्रहणं उल्लेखः ।

( झ ) उदाहरति यथेति । समिदाहरणाय काष्ठाहरणाय साधिदैवत इव अधिदैवता अधिष्ठात्री देवता तया सहित इव अनुमालिनीतीरं मालिन्या नद्यास्तीरे इत्यर्थः । कार्य्यातिपातः कार्य्यस्य व्याघातः । अत्र आतिथ्यरूपकार्य्य-ग्रहणम् ।

( ञ ) उत्तेजनमाह उत्तेजनमिति । स्वकार्य्यस्य सिद्धये अन्यस्य प्रेरणाय प्रवर्त्तनाय कठोरवाक् कटुवाक्यम् उत्तेजनमिति इष्यते ।

( ट ) उदाहरति यथेति । इन्द्रजिदिति । मेघनादं प्रति लक्ष्मणस्योक्तिः । हे इन्द्रजित् ! नाम्नैव न तु कार्य्येन इति भावः प्रचण्डवीर्य्यः प्रचण्डपराक्रमः बलवान् असि भवसि इन्द्रजिदाख्ययैव तव प्रचण्डत्वं बलवत्त्वञ्च ख्यायते इत्यर्थः, धिक् धिक् त्वां पुनः पुनः इत्यर्थः निन्दामि, धिक् निर्भर्त्सननिन्दयोरित्यमरः । यस्मात् अस्मद् भयाकुलः सन् प्रच्छन्नरूपेण अलक्षितरूपेण युध्यसे यदि तव निर्भयत्वं स्यात् तदावश्यं प्रकाश्ययुद्धे तव वर्त्तनं स्यादिति भावः । अत्र प्रकाश्ययुद्धे इन्द्रजितो वर्त्तनं स्वकार्य्यम् ।

**भर्त्सना तु परीवादः** ॥ ४८८ ॥ [ ठ ]

यथा सुन्दराङ्के "दुर्योधनः। धिक्! धिक्! सूत! किं कृतवानसि वत्सस्य मे प्रकृतिदुर्ललितस्य पापः पापं विधास्यति" इत्यादि ( ड )

**नीतिः शास्त्रेण वर्त्तनम्** ॥ ४८९ ॥ [ ढ ]

यथा शाकुन्तले "दुष्मन्तः। विनीतवेशप्रवेश्यानि तपोवनानि" इति (ण)।

**उक्तस्यार्थस्य यत्तु स्यादुत्कीर्त्तनमनेकधा।**
**उपालम्भस्वरूपेण तत् स्यादथ विशेषणम्** ४९० [त]

यथा शाकुन्तले राजानं प्रति "शार्ङ्गरवः। आः! कथमिदं नाम किमिदमुपन्यस्तमिति। ननु भवानेव नितरां लोकवृत्तान्ते निष्णातः।

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्तृमतीं विशङ्कते।

---

( ठ ) परीवादमाह भर्त्सनेति। स्पष्टम्।

( ड ) उदाहरति यथेति। वत्सस्य दुःशासनस्य प्रकृतिदुर्ललितस्य प्रकृत्या स्वभावेन दुर्ललितस्य दुर्विलसितस्य। पापः पापात्मा भीम इत्यर्थः पापम् अनिष्टं वक्षोविदारणरूपमित्यर्थः। अत्र मूर्च्छितदुर्योधनरक्षणाय रणात् रथं प्रत्यावर्त्तितवन्तं सूतं प्रति मोहावसाने दुर्योधनस्य भर्त्सनम्।

( ढ ) नीतिमाह नीतिरिति। शास्त्रेण यथाशास्त्रं वर्त्तनं व्यवहरणं शास्त्रीयकर्मानुष्ठानमित्यर्थः नीतिः।

( ण ) उदाहरति यथेति। तपोवनप्रवेशे औद्धत्यं त्यजेदिति शास्त्रमत्र द्रष्टव्यम्।

( त ) अर्थविशेषणमाह उक्तस्येति। उक्तस्य कथितस्य अर्थस्य विषयस्य उपालम्भस्वरूपेण तिरस्काररूपेण अनेकधा बहुधा यत् उत्कीर्त्तनम् उल्लेखः स्यात् तत् अर्थविशेषणं स्यात्।

अतः समीपे परिणेतुरिष्यते
प्रियाप्रिया वा प्रमदा स्वबन्धुभिः" ॥ (थ)

**प्रोत्साहनं स्यादुत्साह-**
**गिरा कस्यापि योजनम् ॥ ४९१ ॥ [द]**

यथा बालरामायणे।

"कालरात्रिकरालेयं स्त्रीति किं विचिकित्ससि।
तज्जगत्त्रितयं त्रातुं तात! ताड़य ताड़काम्" ॥ (ध)

**साहाय्यं सङ्कटे यत् स्यात्**
**सानुकूल्यं परस्य च ॥ ४९२ ॥ [न]**

---

(थ) उदाहरति यथेति। कथमिदम् उक्तमिति शेषः। उपन्यस्तम् उपस्थापितम्। लोकवृत्तान्ते लौकिकव्यवहारे इत्यर्थः निष्णातः अभिज्ञः। नितरामतिशयेन। सतीमिति। जनः लोकः सतीं साध्वीमपि भर्तृमतीं सधवां स्त्रियं ज्ञातिकुलं पितृकुलमित्यर्थः एकः केवलः आश्रयः यस्याः तादृशीं पितृगृहमात्रवासिनीमित्यर्थः अन्यथा विशङ्कते सदोषां सम्भावयतीत्यर्थः, अतः कारणात् स्वबन्धुभिः स्वस्य स्त्रिया इत्यर्थः बन्धुभिः पित्रादिभिः प्रिया अप्रिया वा प्रमदा दुहितेत्यर्थः परिणेतुः पत्युः समीपे इष्यते रक्षितुमिति शेषः। अत्र किमिदमुपन्यस्तमिति राज्ञ उक्तौ तन्निर्भर्त्सनरूपेण अाः कथमित्याद्युत्कीर्त्तनस्य बहुधा उक्तत्वात् अर्थविशेषणम्।

(द) प्रोत्साहनमाह प्रोत्साहनमिति। उत्साहगिरा उत्साहसूचकवाक्येन कस्यापि योजनम् उत्तेजनं प्रोत्साहनं स्यात्।

(ध) उदाहरति कालरात्रीति। इयं कालरात्रिवत् करालादारुणा अतः स्त्री इति स्त्रियं कथं हन्मीति भावः कथं विचिकित्ससि हन्यां वा न वेति संशयेन तिष्ठसि। हे तात! तत् तस्मात् जगतां त्रितयं त्रिभुवनमित्यर्थः त्रातुं रक्षितुं ताड़कां ताड़य जहीत्यर्थः। अत्र उत्साहवाक्येन रामस्य उत्तेजनम्।

(न) साहाय्यमाह साहाय्यमिति। सङ्कटे विपदि परस्य सानुकूल्यम् अनुकूलतया यत्, तत् साहाय्यं स्यात्।

यथा वेण्यां कृपं प्रति । "अश्वत्थामा । त्वमपि तावद्राज्ञः पार्श्ववर्त्ती भव । कृपः । वाञ्छाम्यहमद्य प्रतिकर्त्तुम्" इत्यादि (प) ।

**अभिमानः स एव स्यात्** ॥ ४६३ ॥ [फ]

यथा तत्रैव । "दुर्य्योधनः । मातः ! किमप्यसदृशं कृपणं वचस्ते" इत्यादि (ब) ।

**प्रश्रयादनुवर्त्तनम् ।**

**अनुवृत्तिः** ॥ ४६४ ॥ [भ]

यथा शाकुन्तले राजा शकुन्तलां प्रति । "अयि ! तपो वर्द्धते ? अनसूया । दाणिं अदिधिविसेसलाहेण" इत्यादि (२८) (म) ।

**भूतकार्य्याख्यानमुत्कीर्त्तनं मतम्** ॥ ४६५ ॥ [य]

---

(२८) दाणिं इति । इदानीमतिथिविशेषलाभेनेत्यादि सं० ।

---

(प) उदाहरति यथेति । स्पष्टम् । अत्र रणव्यापाररूपे सङ्कटे राज्ञः आनुकूल्यविधानम् ।

(फ) अभिमानमाह अभिमान इति । अभिमानः अहङ्कारः ।

(ब) उदाहरति यथेति । असदृशम् अयोग्यं कृपणं क्षुद्रम् । अत्र मातुराक्षेपेण दुर्य्योधनस्य अभिमानः सूच्यते ।

(भ) अनुवृत्तिमाह प्रश्रयादिति । प्रश्रयात् विनयात् अनुवर्त्तनम् अनुसरणं प्रतिवचनादिना सन्तोषणम् अनुवृत्तिः ।

(म) उदाहरति यथेति । स्पष्टम् । अत्र अनसूयायाः प्रत्युत्तरदाने प्रश्रयः ।

(य) उत्कीर्त्तनमाह भूतेति । भूतस्य अतीतस्य कार्य्यस्य आख्यानं कथनम् उत्कीर्त्तनं मतम् ।

यथा बालरामायणे ।

"अत्रासीत् फणिपाशबन्धनविधिः शक्त्या भवद्देवरे ।
गाढं वक्षसि ताड़िते हनुमता द्रोणाद्रिरत्राहृतः" इत्यादि (र) ।

**याच्ञा तु क्वापि याच्ञायाः**

**स्वयं दूतमुखेन वा ॥ ४९६ ॥ [ल]**

यथा ।

"अद्यापि देहि वैदेहीं दयालुस्त्वयि राघवः ।
शिरोभिः कन्दुकक्रीड़ां किं कारयसि वानरान्" ॥ (व)

**परिहार इति प्रोक्तः**

**कृतानुचितमार्ज्जनम् ॥ ४९७ ॥ [श]**

यथा ।

"प्राणप्रयाणदुःखार्त्त उक्तवानस्म्यनक्षरम् ।
तत् क्षमस्व विभो ! किञ्च सुग्रीवस्ते समर्पितः" ॥ (ष)

---

(र) उदाहरति यथेति । अत्र भूतस्य नागपाशबन्धनादेः कार्य्यस्य कथनम् ।

(ल) याच्ञामाह याच्ञेति । स्वयं वा दूतमुखेन क्वापि जने या याच्ञा प्रार्थना सा याच्ञा । स्वयं याच्ञाया उदाहृतं, भो लङ्केश्वर ! दीयतां जनकजा रामः स्वयं याचते इत्यादि ।

(व) दूतमुखेन उदाहरति यथेति । अद्यापीति । अद्यापि इदानीमपि वैदेहीं सीतां देहि प्रत्यर्पय, राघवः रामः त्वयि दयालुः अस्तीति शेषः । शिरोभिः दशभिरिति भावः वानरान् किं कथं कन्दुकक्रीड़ां कारयसि वानरास्तव शिरोभिः संग्रामपतितैः कन्दुकक्रीड़ां करिष्यति तत् कथं सहसे इति भावः ।

(श) परिहारमाह परिहार इति । कृतस्य अनुचितस्य कर्म्मणः मार्ज्जनं क्षमा परिहारः प्रोक्तः ।

(ष) उदाहरति प्राणेति । रामं प्रति वालिन उक्तिः । प्राणप्रयाणे यत् दुःखं यातना तेन आर्त्तः व्यथितः सन् यत् अनक्षरं दुरक्षरमित्यर्थः उक्तवान्

अवधीरितकर्त्तव्य-

कथनन्तु निवेदनम् ॥ ४९८ ॥ [स]

यथा राघवाभ्युदये। "लक्ष्मणः। आर्य्य! समुद्राभ्यर्थनया गन्तुमुद्यतोऽसि किमेतत्" (ह)।

प्रवर्त्तनन्तु कार्य्यस्य

यत् स्यात् साधुप्रवर्त्तनम् ॥ ४९९ ॥ [क्ष]

यथा वेण्यां "राजा। कञ्चुकिन्! देवस्य देवकीनन्दनस्य बहुमानात् वत्सस्य भीमसेनस्य विजयमङ्गलाय प्रवर्त्तन्तां तत्रोपचिताः समारम्भाः (क)।

आख्यानं पूर्ववृत्तोक्तिः ॥ ५०० ॥ [ख]

यथा तत्रैव। "देशः सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः" इत्यादि।

---

त्वया तपस्विचाण्डालेत्यादि कटुवाक्यं कथितवानस्मि, हे विभो! तत् क्षमस्व, किञ्च अन्यच्च सुग्रीवः मम कनीयान् भ्राता ते तुभ्यं समर्पितः। अत्र अनुचितकार्य्यस्य पूर्वकृतस्य मार्जनम्।

(स) निवेदनमाह अवधीरितेति। अवधीरितस्य अवज्ञातस्य अर्थस्य विषयस्य कर्त्तव्यकथनं कर्त्तव्यत्वनिश्चयः निवेदनम्।

(ह) उदाहरति यथेति। स्पष्टम्। अत्र समुद्राभ्यर्थनार्थं गमनं पूर्वमवज्ञातं कथं पुनस्तदर्थं गमनम् इति लक्ष्मणस्य तत्कर्त्तव्यत्वे निश्चयात् तद्वारणार्थं निवेदनम्।

(क्ष) प्रवर्त्तनमाह प्रवर्त्तनमिति। कार्य्यस्य यत् साधुप्रवर्त्तनं तत् प्रवर्त्तनं स्यात्।

(क) उदाहरति यथेति। उपचिताः वर्द्धिताः समारम्भाः समुद्योगाः। अत्र युद्धकार्य्यस्य सम्यक्प्रवर्त्तनम्।

(ख) आख्यानमाह आख्यानमिति। पूर्ववृत्तस्य पुराघटितस्य उक्तिः कथनम् आख्यानम्।

**युक्तिरर्थावधारणम् ॥ ५०१ ॥ [ग]**

यथा तत्रैव ।

"यदि समरमपास्य नास्ति मृत्यो-
र्भयमिति युक्तमितोऽन्यतः प्रयातुम् ।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः कुरुध्वम्" ॥ (घ)

**प्रहर्षः प्रमदाधिक्यम् ॥ ५०२ ॥ [ङ]**

यथा शाकुन्तले । "राजा । तत्किमिदानीमात्मानं पूर्णमनोरथं नाभिनन्दामि" (च) ।

**शिक्षा स्यादुपदेशनम् ॥ ५०३ ॥ [छ]**

यथा तत्रैव । "सहि ! ण जुत्तं अस्समवासिणो जणस्स अकिदसक्कारं अदिधिविसेसं उज्झिअ सच्छंददो गमणम्" (३०) (ज) । एषाञ्च लक्षणं नाट्यालङ्काराणां समान्यत एकरूप-

---

(३०) सखीति । सखि ! न युक्तमाश्रमवासिनो जनस्याकृतसत्कारमतिथिविशेषमुज्झित्वा स्वच्छन्दतो गमनम् इति सं० ।

---

(ग.) युक्तिमाह युक्तिरिति । अर्थस्य कार्य्यस्य अवधारणं निश्चयः युक्तिः ।

(घ) उदाहरति यथेति । यदीति । यदि समरं युद्धम् अपास्य त्यक्त्वा मृत्योः भयं नास्ति न भवेत् तदा इतः समरात् अन्यतः अन्यत्र प्रयातुं गन्तुं युक्तमिति । अथ यदि जन्तोः देहिनः मरणम् अवश्यमेव निश्चितमेव तदा किमिति कथं यशः मुधा वृथा मलिनं कुरुध्वम् । अत्र समरस्य कर्त्तव्यतायां निश्चयः ।

(ङ) प्रहर्षमाह प्रहर्ष इति । प्रमदस्य प्रकृष्टानन्दस्य आधिक्यं प्रहर्षः ।

(च) उदाहरति यथेति । स्पष्टम् । अत्र शकुन्तलायाः पुनःप्राप्तौ आनन्दाविश्ययः ।

(छ) उपदेशनमाह शिक्षेति । स्पष्टम् ।

त्वेऽपि भेदेन व्यपदेशो गड्डलिकाप्रवाहेण। एषु च केषाञ्चिद् गुणालङ्कारभावसन्ध्यङ्गविशेषान्तर्भावेऽपि नाटके प्रयत्नतः कर्त्तव्यत्वात्तद्विशेषोक्तिः। एतानि च (झ)।

"पञ्चसन्धि चतुर्वृत्ति चतुःषष्ट्यङ्गसंयुतम्।
षट्त्रिंशल्लक्षणोपेतमलङ्कारोपशोभितम्॥
महारसं महाभोगमुदात्तरचनान्वितम्।
महापुरुषसञ्चारं साध्वाचारं जनप्रियम्॥
सुश्लिष्टसन्धियोगञ्च सुप्रयोगं सुखाश्रयम्।
मृदुशब्दातिपातञ्च कविः कुर्य्यात्तु नाटकम्"॥ (ञ)

इति मुनिनोक्तत्वात् नाटकेऽवश्यं कर्त्तव्यान्येव। वीथ्यङ्गानि वक्ष्यन्ते।

---

(ज) उदाहरति यथेति। स्पष्टम्। अत्र शकुन्तलां प्रति तत्सख्या उपदेशवाक्यम्।

(झ) एषामिति। यदि च भूषणादीनि पूर्वोक्तानि नाट्यभूषणहेतुत्वरूपसामान्यधर्मसंयोगात् नाट्यालङ्कारेऽन्तर्भवितुमर्हन्ति तथाप्येषां भेदकथनं गड्डलिकाप्रवाहेण गतानुगतिकन्यायेन इत्यर्थः प्राचीनोक्तरीत्येति भावः।

(ञ) पञ्चेति। पञ्च सन्धयः मुखादयः यत्र तत्, चत्वारः वृत्तयः कौशिक्यादयः यत्र तत्, चतुःषष्ट्या अङ्गैः पूर्वोक्तैः संयुतं, षट्त्रिंशता लक्षणैः पूर्वोक्तैः उपेतं युक्तम्, अलङ्कारैः नाट्यालङ्कारैः पूर्वोक्तैः उपशोभितं, महान् परिपुष्ट इत्यर्थः रसः शृङ्गारः वीरो वा यत्र तादृशं, महान् भोगः भावादिर्यत्र तादृशं, महासहायं वा, उदात्ता विलासह्रादिगुणयुक्ता इति भावः या रचना तया अन्वितं युक्तम्, महापुरुषस्य नायकप्रधानस्य धीरोदात्तस्य इत्यर्थः सञ्चारः स्थितिर्यस्मिन् तथोक्तं, साधुः सद्भिरनुष्ठेय इत्यर्थः आचारः व्यवहारः यत्र तादृशं, जनप्रियं लोकरञ्जकं, सुश्लिष्टः सन्धेः मुखादेर्योगः समावेशः यस्मिन् तथाभूतं, सुप्रयोगं सुखाभिनयं, सुखाश्रयम् आनन्दनिलयं, मृदुः सुकोमलः शब्दानाम् अतिपातः प्रयोगः यस्मिन् तथाभूतं नाटकं कविः कुर्य्यादित्यन्वयः।

लास्याङ्गान्याह ।

गेयपदं स्थितपाठ्यमासीनं पुष्पगण्डिका ।
प्रच्छेदकस्त्रिगूढञ्च सैन्धवाख्यं द्विगूढकम् ॥
उत्तमोत्तमकञ्चान्यदुक्तप्रत्युक्तमेव च ।
लास्ये दशविधं ह्येतदङ्गमुक्तं मनीषिभिः ॥
५०४ ॥ [ट]

अत्र च ।

तन्त्रीभाण्डं पुरस्कृत्योपविष्टस्यासने पुरः ।
शुष्कं गानं गेयपदम् ॥ ५०५ ॥ [ठ]

यथा गौरीगृहे वीणां वादयन्ती मलयवती ।

"उत्फुल्लकमलकेसरपरागगौरद्युते ! मम हि गौरि ! ।
अभिवाञ्छितं प्रसिध्यतु भगवति ! युष्मत्प्रसादेन" ॥ (ड)

स्थितपाठ्यं तदुच्यते ।
मदनोत्तापिता यत्र पठति प्राकृतं स्थिता ॥
५०६ ॥ [ढ]

---

(ट) गेयपदमिति । गेयपदादीनि दश लास्याङ्गानि मनीषिभिरुक्तानीत्यर्थः ।

(ठ) गेयपदमाह तन्त्रीति । तन्त्रीभाण्डं वीणायन्त्रं पुरस्कृत्य अग्रेकृत्य गृहीत्वेत्यर्थः आसने पुरः अग्रतः उपविष्टस्य यत् शुष्कं पवित्रं गानं तत् गेयपदम् ।

(ड) उदाहरति यथेति । गौरीगृह इति । उत्फुल्लं विकसितं यत् कमलं पद्मं तस्य केसरपरागवत् गौरी द्युतिर्यस्यास्तादृशि ! भगवति ! गौरि ! पार्वति ! युष्मत्प्रसादेन भवत्याः अनुग्रहेण मम अभिवाञ्छितं प्रसिध्यतु सफलीभवतु ।

अभिनवगुप्तपादास्त्वाहुः । "उपलक्षणञ्चैतत् । क्रोधोद्भ्रान्तस्यापि प्राकृतपठनं स्थितपाठ्यमिति" ।

निखिलातोद्यरहितं शोकचिन्तान्विताबला ।
सुप्रसारितगात्रं यदासीदासीनमेव तु ॥ [ण]
आतोद्यमिश्रितं गेयं छन्दांसि विविधानि च ।
स्त्रीपुंसयोर्विपर्य्यासचेष्टितं पुष्पगण्डिका ॥ [त]
अन्यासङ्गं पतिं मत्वा प्रेमविच्छेदमन्युना ।
वीणापुरःसरं गानं स्त्रियाः प्रच्छेदको मतः ॥ [थ]
स्त्रीवेशधारिणां पुंसां नाट्यं श्लक्ष्णं त्रिगूढकम् ॥
५०७ ॥ [द]

---

(ढ) स्थितपाठ्यमाह स्थितिपाठ्यमिति । यत्र मदनेन उत्तापिता स्थिता सती प्राकृतं पठति तत् पाठ्यमित्यर्थः स्थितिपाठ्यम् उच्यते ।

(ण) आसीनमाह निखिलेति । शोकेन चिन्तया चान्विता अबला निखिलातोद्यरहितं निखिलेन आतोद्येन रहितं केनापि वाद्येन न सङ्गतमित्यर्थः सुप्रसारितं स्वलङ्कृतं गात्रं यस्मिन् तत् यथा तथा यत् यस्मिन्नित्यर्थे अव्ययम् । यस्मिन् गेये इत्यर्थः आसीत् तिष्ठेत् तत् आसीनम् ।

(त) पुष्पगण्डिकामाह आतोद्येति । आतोद्येन वादित्रेण मिश्रितं सङ्गतं गेयं विविधानि नानाप्रकाराणि छन्दांसि छन्दोबन्धनपूर्वकगीतानि इत्यर्थः तथा स्त्रीपुंसयोः विपर्य्यासचेष्टितं वैपरीत्यविहरणं पुष्पगण्डिका ।

(थ) प्रच्छेदकमाह अन्येति । पतिम् अन्यासङ्गम् अन्यस्याम् आसक्तमित्यर्थः मत्वा प्रेमविच्छेदेन यः मन्युः शोकः तेन हेतुना स्त्रियाः वीणापुरःसरं गानं प्रच्छेदकः मतः ।

(द) त्रिगूढमाह स्त्रीति । स्त्रीवेशधारिणां पुंसां श्लक्ष्णं मनोज्ञं नाट्यं नर्त्तनं त्रिगूढम् ।

यथा मालत्याम् । "मकरन्दः । एषोऽस्मि मालती संवृत्तः ।

कश्चन भ्रष्टसङ्केतः सुव्यक्तकरणान्वितः ।
प्राकृतं वचनं वक्ति यत्र तत् सैन्धवं विदुः ॥

५०८ ॥ [ध]

करणं वीणादिक्रिया ।

चतुरस्रपदं गीतं मुखप्रतिमुखान्वितम् ।
द्विगूढं रसभावाढ्यमुत्तमोत्तमकं पुनः ॥ [न]
कोपप्रसादजमधिक्षेपयुक्तं रसोत्तरम् । [प]
हावहेलान्वितं चित्रश्लोकबन्धमनोहरम् ॥
उक्तिप्रत्युक्तिसंयुक्तं सोपालम्भमलीकवत् ।
विलासान्वितगीतार्थमुक्तप्रत्युक्तमुच्यते ॥

५०९ ॥ [फ]

---

(ध) सैन्धवमाह कश्चनेति । भ्रष्टसङ्केतः सङ्केतस्थाने नायिकाया अगमनात् च्युतसङ्केतस्थान इत्यर्थः, सुव्यक्तेन करणेन अन्वितः कश्चन कोऽपि पुरुषः यत्र प्राकृतं वचनं वक्ति तत् सैन्धवं विदुः ।

(न) द्विगूढमाह चतुरस्रपदमिति । चतुरस्राणि सामाजिकमनोहराणीति भावः पदानि यत्र तादृशं, मुखसन्धिप्रतिमुखसन्धिसमन्वितं, रसभावाभ्याम् आढ्यं युक्तं गीतं द्विगूढम् ।

(प) उत्तमोत्तममाह उत्तमोत्तमकमिति । कोपात् प्रसादाद्वा जातम्, अधिक्षेपः तिरस्कारः तद्युक्तं, रसोत्तरं सरसमित्यर्थः, गीतम् उत्तमोत्तमम् ।

(फ) उक्तप्रत्युक्तमाह हावेति । हावेन भ्रूनेत्रादिविकारैस्त्विति लक्षणोक्तेन, हेलया हेलात्यन्तसमालक्ष्यविकारः स्यात् स एव चेति लक्षणोक्तेन अन्वितं, चित्रेण मनोज्ञेन श्लोकबन्धेन पद्यरचनेन मनोहरम्, उक्तिप्रत्युक्तिभ्यां वचनोत्तराभ्यां संयुक्तं, सोपालम्भं तिरस्कारव्यञ्जकम्, अलीकवत् मृषावादसहितम् अप्रियवद्वा, विलासेन अन्वितः युक्तः गीतस्य अर्थः यत्र तादृशं, गीतम् उक्तप्रत्युक्तम् उच्यते ।

स्पष्टान्युदाहरणानि ।

एतदेव यदा सर्वैः पताकास्थानकैर्युतम् ।
अङ्कैश्च दशभिर्धीरा महानाटकमूचिरे ॥
५१० ॥ [ब]

एतदेव नाटकं यथा बालरामायणम् । अथ प्रकरणम् ।

भवेत् प्रकरणे वृत्तं लौकिकं कविकल्पितम् ।
शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक् ।
सापायधर्मकामार्थपरो धीरप्रशान्तकः ॥
५११ ॥ [भ]

विप्रनायकं यथा मृच्छकटिकम् । अमात्यनायकं मालती-माधवम् । वणिङ्नायकं पुष्पभूषितम् ।

नायिका कुलजा क्वापि वेश्या क्वापि द्वयं क्वचित् ।
तेन भेदास्त्रयस्तस्य तत्र भेदस्तृतीयकः ॥

---

(ब) महानाटकमाह एतदिति । एतत् नाटकमेव सर्वैः पूर्वोक्तैः पताकास्थानकैः दशभिरङ्कैश्च युतं धीराः विद्वांसः महानाटकम् ऊचिरे उक्तवन्तः ।

(भ) प्रकरणमाह अथेति । भवेदिति । प्रकरणे वृत्तं वर्णनीयं लौकिकं लोकतःप्रसिद्धं कविना कल्पितं स्वकपोलरचितमित्यर्थः भवेत् । शृङ्गारः अङ्गी प्रधानम् । नायकः धीरप्रशान्तः पूर्वोक्तलक्षणः सापायाः अपायः क्षयः तत्सहिताः ये धर्माः स्वर्गसाधनभूताः कामाः स्त्रीपुत्रादयः अर्थाः भोगसाधनानि धनादीनि तत्परः तदासक्तः न तु अपायरहितमुक्तिकामीति भावः ।

(म) नायिकेति । क्वापि प्रकरणे नायिका कुलजा कुलीना, क्वापि वेश्या, क्वचिद्वा द्वयं कुलजा वेश्या चेत्यर्थः, तेन हेतुना तस्य प्रकरणस्य त्रयः भेदाः

**कितवद्यूतकारादिविटचेटकसङ्कुलः ॥**

**५१२ ॥ [म]**

कुलस्त्री पुष्पभूषिते। वेश्या तु रङ्गदत्ते। द्वे अपि मृच्छकटिकायाम्। अस्य नाटकप्रकृतित्वात् (य)। शेषं नाटकवत्। अथ भाणः।

**भाणः स्याद्धूर्त्तचरितो नानावस्थान्तरात्मकः।**
**एकाङ्क एक एवात्र निपुणः पण्डितो विटः ॥**
**रङ्गे प्रकाशयेत् स्वेनानुभूतमितरेण वा।**
**सम्बोधनोक्तिप्रत्युक्ती कुर्य्यादाकाशभाषितैः ॥**
**सूचयेद्वीरशृङ्गारौ शौर्य्यसौभाग्यवर्णनैः।**
**तत्रेतिवृत्तमुत्पाद्यं वृत्तिः प्रायेण भारती ॥**
**मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च ॥**

**५१३ ॥ [र]**

---

विशेषाः। तत्र तेषु भेदेषु तृतीयो भेदः यत्र कुलजा वेश्या च नायिका इति भावः। कितवः धूर्त्तः द्यूतकारः आदिपदेन सभिकादीनां ग्रहणं तथा विटः पूर्वोक्तलक्षणः तथा चेटकः एतैः सङ्कुलः व्याप्तः।

(य) अस्येति। विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतमित्युक्तेः अस्य प्रकरणस्य नाटकमेव प्रकृतिर्मूलकारणं यस्य तथोक्तः तस्य भावः तत्त्वात्।

(र) भाणमाह अथेति। भाण इति। धूर्त्तस्य नायकस्य चरितं यत्र सः, नानाविधम् अवस्थान्तं दशाभेदः आत्मा स्वरूपं यस्य तादृशः, तथा एकाङ्कः एकेनैव अङ्केन समापनीय इत्यर्थः, भाणः स्यात्। अत्र एक एव निपुणः चतुरः पण्डितः विटः स्वेन आत्मना इतरेण वा अनुभूतं वस्तु रङ्गे नाट्यशालायां प्रकाशयेत्। आकाशभाषितैः सम्बोधनेन उक्तिप्रत्युक्ती कुर्य्यात्। शौर्य्यसौभाग्यवर्णनैः वीरशृङ्गारौ रसौ शौर्य्यवर्णनेन वीरं सौभाग्यवर्णनेन शृङ्गारमित्यर्थः सूचयेत्।

तत्र आकाशभाषितरूपं परवचनमपि स्वयमेवानुवदन्नुत्तरप्रत्युत्तरे कुर्य्यात्। शृङ्गारवीररसौ च सौभाग्यशौर्य्यवर्णनया सूचयेत्। प्रायो भारती कौशिक्यपि वृत्तिर्भवति। लास्याङ्गानि गेयपदादीनि। उदाहरणं लीलामधुकरः।

अथ व्यायोगः।

ख्यातेतिवृत्तो व्यायोगः स्वल्पस्त्रीजनसंयुतः।
हीनो गर्भविमर्षाभ्यां नरैर्बहुभिराश्रितः॥
एकाङ्कश्च भवेदस्त्रीनिमित्तसमरोदयः।
कौशिकीवृत्तिरहितः प्रख्यातस्तत्र नायकः॥
राजर्षिरथ दिव्यो वा भवेद्धीरोद्धतश्च सः।
हास्यशृङ्गारशान्तेभ्य इतरेऽत्राङ्गिनो रसाः॥
५१४॥ [ल]

यथा सौगन्धिकाहरणम्। अथ समवकारः।

वृत्तं समवकारे तु ख्यातं देवासुराश्रयम्।
सन्धयो निर्विमर्षास्तु त्रयोऽङ्कास्तत्र चादिमे॥
सन्धी द्वावन्त्ययोस्तद्वदेक एको भवेत् पुनः।

---

तत्र भाणे इतिवृत्तम् उत्पाद्यं कल्पनीयं प्रायेण भारती वृत्तिः, मुखं निर्वहणञ्च एतौ सन्धी, तथा लास्याङ्गानि दशापि प्रयोक्तव्यानीति शेषः।

(ल) व्यायोगमाह ख्यातेति। ख्यातेतिवृत्त इति। ख्यातं पुराणादिषु प्रसिद्धम् इतिवृत्तं यस्य तादृशः, गर्भविमर्षाभ्यां सन्धिभ्यां हीनः गर्भविमर्षसन्धिरहित इत्यर्थः, अस्त्रीनिमित्तसमरोदयं स्त्रीनिमित्तं विना समरस्य संग्रामस्य उदयः उपस्थितिर्यस्मिन् तथाभूतः। अन्यत् सुगमम्।

(व) समवकारमाह वृत्तेति। वृत्तमिति। देवासुराश्रयं देवासुरसम्बद्धम्।

नायका द्वादशोदात्ताः प्रख्याता देवदानवाः ॥
फलं पृथक् पृथक् तेषां वीरमुख्योऽखिलो रसः ।
वृत्तयो मन्दकौशिक्यो नात्र विन्दुप्रवेशकौ ॥
वीथ्यङ्गानि च तत्र स्युर्यथालाभं त्रयोदश ।
गायत्र्युष्णिङ्मुखान्यत्र छन्दांसि विविधानि च ॥
त्रिशृङ्गारस्त्रिकपटः कार्य्यश्चायं त्रिविद्रवः ।
वस्तु द्वादशनाड़ीभिर्निष्पाद्यं प्रथमाङ्कगम् ॥
द्वितीयेऽङ्के च तिसृभिर्द्वाभ्यामङ्के तृतीयके ॥

५१५ ॥ [व]

नाड़िका घटिकाद्वयमुच्यते । विन्दुप्रवेशकौ च नाटकोक्तावपि नेह विधातव्यौ । तत्र ।

धर्मार्थकामैस्त्रिविधः शृङ्गारः कपटः पुनः ।

---

निर्विमर्षाः विमर्षरहिताः सन्धयः चतुर्थसन्धिं विना चत्वारः सन्धयः प्रयोज्या इत्यर्थः । अङ्काः परिच्छेदाः त्रयः । तत्र आदिमे अङ्के द्वौ सन्धी मुखप्रतिमुखे इति भावः, अन्त्ययोः द्वितीयतृतीययोरङ्कयोरित्यर्थः एकः एकः सन्धिः गर्भः निर्वहणश्च इत्यर्थः भवेत् । उदात्ताः धीरोदात्ताः । तेषां नायकानां पृथक् पृथक् भिन्नं भिन्नं फलम् । अखिलः समग्रो रसः वीरमुख्यः वीररस एव प्रधानम् अन्ये अङ्गानीति भावः । षड़क्षरा वृत्तिर्गायत्री सप्ताक्षरा वृत्तिरुष्णिक् तत्प्रभृतीनि । मन्दकौशिक्यः मन्दा कौशिकी यासु ताः प्रायेण कौशिकीहीना इत्यर्थः । द्वादशनाड़ीभिः द्वादशभिः घटिकाभिः प्रथमाङ्कगं प्रथमाङ्कनिविष्टं वस्तु निष्पाद्यं सम्पादनीयम् । द्वितीयेऽङ्के तिसृभिः नाड़ीभिः तथा तृतीये अङ्के द्वाभ्यां नाड़ीभ्यां तत्रत्यं वस्तु निष्पाद्यमिति शेषः ।

(श) शृङ्गारस्य कपटस्य विद्रवस्य च त्रैविध्यं दर्शयति तत्रेति । धर्मार्थेति ।

स्वाभाविकः कृत्रिमश्च दैवजो विद्रवः पुनः ॥
अचेतनैश्चेतनैश्च चेतनाचेतनैः कृतः ॥

५१६ ॥ [ग]

तत्र शास्त्राविरोधेन कृतो धर्मशृङ्गारः अर्थलाभार्थकल्पितः । अर्थशृङ्गारः । प्रहसनशृङ्गारः कामशृङ्गारः । तत्र कामशृङ्गारः प्रथमाङ्क एव । अन्ययोस्तु न नियम इत्याहुः । चेतनाचेतना गजादयः । समवकीर्य्यन्ते (घ) बहवोऽर्था अस्मिन्निति समवकारः । यथा समुद्रमथनम् ।

अथ डिमः ।

मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ।
उपरागैश्च भूयिष्ठो डिमः ख्यातोऽतिवृत्तकः ॥
अङ्गी रौद्ररसस्तत्र सर्वेऽङ्गानि रसाः पुनः ।
चत्वारोऽङ्का मता नेह विष्कम्भकप्रवेशकौ ॥
नायका देवगन्धर्वयक्षरक्षो महोरगाः ।
भूतप्रेतपिशाचाद्याः षोडशात्यन्तमुद्धताः ॥
वृत्तयः कौशिकीहीना निर्विमर्षाश्च सन्धयः ।

---

शृङ्गारः धर्मार्थकामैः त्रिविधः कपटः स्वाभाविकः कृत्रिमः दैवजः दैवेन जनितः । विद्रवः नगरादिकृतः सम्भ्रमः अचेतनकृतः चेतनकृतः तथा चेतनाचेतनोभयकृत इति त्रिविधः ।

(घ) समवकीर्य्यन्ते सम्यक् प्रयुज्यन्ते इत्यर्थः ।

(ङ) डिममाह अथेति । उपरागैः चन्द्रसूर्य्यादीनां ग्रहविद्वेषैः भूयिष्ठः

दीप्ताः स्युः षड्रसाः शान्तहास्यशृङ्गारवर्जिताः ॥

५१७ ॥ [ सं ]

अत्रोदाहरणञ्च । "त्रिपुरदाहः" इति महर्षिः । अथेहामृगः ।

ईहामृगो मिश्रवृत्तश्चतुरङ्कः प्रकीर्त्तितः ।
मुखप्रतिमुखे सन्धी तत्र निर्वहणं तथा ॥
नरदिव्यावनियमौ नायकप्रतिनायकौ ।
ख्यातौ धीरोद्धतावन्यो गूढभावादयुक्तकृत् ॥
दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः ।
शृङ्गाराभासमप्यस्य किञ्चित् किञ्चित् प्रदर्शयेत् ॥
पताकानायका दिव्या मर्त्या वापि दशोद्धताः ।
युद्धमानीय संरम्भं परं व्याजान्निवर्त्तते ॥
महात्मानो वधप्राप्ता अपि वध्याः स्युरत्र नो ॥
एकाङ्को देव एवात्र नेतेत्याहुः परे पुनः ।
दिव्यस्त्रीहेतुकं युद्धं नायकाः षडितीतरे ॥

५१८ ॥ [ ह ]

---

बहुलः । ख्यातं पुराणादिप्रसिद्धम् इतिवृत्तं यस्य तादृशः । दीप्ताः उज्ज्वलाः । अन्यत् स्पष्टम् ।

(४) ईहामृगमाह अथेति । अनियमौ नियमवर्जितौ क्वचित् नरो नायकः प्रतिनायको वा क्वचित् दिव्यः नायकः प्रतिनायको वा इति नायकप्रतिनायकयोर्नियमो नास्तीति भावः । गूढभावात् गोपनभावात् अयुक्तकृत् अनुचितकार्य्यकारीत्यर्थः । अपहारादिना बलात्कारादिना आदिपदेन छलादिपरिग्रहः । परं शत्रुं प्रतिनायकमित्यर्थः संरम्भं क्रोधम् आनीय प्रापय्य युद्धं

मिश्रं ख्याताख्यातम्। अन्यः प्रतिनायकः। पताकानायकास्तु नायकप्रतिनायकयोर्मिलिता दश। नायको मृगवदलभ्यां नायिकामत्र ईहते वाञ्छतीति ईहामृगः। यथा कुसुमशेखरविजयादि। अथ अङ्कः।

उत्सृष्टिकाङ्क एकाङ्को नेतारः प्राकृता नराः।
रसोऽत्र करुणः स्थायी बहुस्त्रीपरिदेवितम्॥
प्रख्यातमितिवृत्तञ्च कविर्बुद्ध्या प्रपञ्चयेत्।
भाणवत् सन्धिवृत्ताङ्गान्यस्मिन् जयपराजयौ॥
युद्धञ्च वाचा कर्त्तव्यं निर्वेदवचनं बहु॥
५१८॥ [च]

इमञ्च केचित् "नाटकाद्यन्तःपात्यङ्कपरिच्छेदार्थम् उत्सृष्टिकाङ्कनामानम्" आहुः। अन्ये तु "उत्क्रान्ता विलोमरूपा सृष्टिर्यत्र" इति उत्सृष्टिकाङ्कः। यथा शर्मिष्ठाययातिः। अथ वीथी।

वीथ्यामेको भवेदङ्कः कश्चिदेकोऽत्र कल्प्यते।
आकाशभाषितैरुक्तैश्चित्रां प्रत्युक्तिमाश्रितः॥
सूचयेद् भूरिशृङ्गारं किञ्चिदन्यान् रसानपि।

---

छलेत्यर्थः व्याजात् छलात्। वधप्राप्ताः वधप्राप्तियोग्या इत्यर्थः। अन्यत् सुगमम्।

(च) अङ्कमाह अथेति। उत्सृष्टिकाङ्कः अङ्कस्य नामान्तरमेतत्। प्रपञ्चयेत् विस्तारयेत्। प्राकृताः सामान्याः नातिमहान्त इत्यर्थः। अन्यत् स्पष्टम्।

(छ) वीथीमाह अथेति। अत्र वीथ्याम् एकः अद्वितीय इत्यर्थः कश्चित्

मुखनिर्वहणे सन्धी अर्थप्रकृतयोऽखिलाः ॥

५२० [ क ]

कश्चिदित्युत्तमो मध्यमोऽधमो वा। शृङ्गारबहुलत्वाच्च अस्याः कौशिकीवृत्तिबहुलत्वम् ।

अस्यास्त्रयोदशाङ्गानि निर्दिशन्ति मनीषिणः ।
उद्घात्यकावलगिते प्रपञ्चस्त्रिगतं छलम् ॥
वाक्केल्यधिबले गण्डमवस्यन्दितनालिके ।
असत्प्रलापव्याहारमृदवानि च तानि तु ॥

५२१ ॥ [ ख ]

तत्र उद्घात्यकावलगिते प्रस्तावनाप्रस्तावे सोदाहरणं लक्षिते ।

मिथो वाक्यमसद्भूतं
प्रपञ्चो हास्यकृन्मतः ॥ ५२२ ॥ [ग]

यथा विक्रमोर्वश्याम् । वड़भीस्थविदूषकचेट्योरन्योन्यवचनम् ।

त्रिगतं स्यादनेकार्थ-
योजनं श्रुतिसाम्यतः ॥५२३॥ [घ]

---

नायक इति शेषः कल्प्यते निबध्यते । अखिलाः समग्राः पञ्चेति भावः अर्थप्रकृतयः बीजादयः प्रयोज्या इति शेषः ।

( ख ) अस्या इति । अस्याः वीथ्याः । अन्यत् स्पष्टम् ।

( ग ) प्रपञ्चमाह मिथ इति । मिथः परस्परं हास्यकृत् हासजनकम् असद्भूतं मिथ्याभूतं वाक्यं प्रपञ्चः ।

यथा तत्रैव "राजा ।

सर्वक्षितिभृतां नाथ ! दृष्टा सर्वाङ्गसुन्दरी ।
रामा रम्ये वनान्तेऽस्मिन् मया विरहिता त्वया" ॥ (ङ)

नेपथ्ये तत्रैव प्रतिशब्दः । "राजा । कथं दृष्टेत्याह" ।

अत्र प्रश्नवाक्यमेवोत्तरत्वेन योजितम् । "नटादित्रितयविषयमेवेदम्" इति कश्चित् ।

प्रियाभैरप्रियैर्वाक्यै-
र्विलोभ्य छलनाच्छलम् ॥ ५२४ ॥ [च]

यथा वेण्यां "भीमार्जुनौ ।

कर्त्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रम् ।
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः
क्वास्ते दुर्योधनोऽसौ कथयतु न रुषा द्रष्टुमभ्यागतौ स्वः" ॥ (छ)

---

(घ) त्रिगतमाह त्रिगतमिति । श्रुतिसाम्यतः शब्दसादृश्यात् अनेकार्थयोजनं बह्वर्थकल्पनं त्रिगतं स्यात् ।

(ङ) उदाहरति यथेति । सर्वेति । उर्वशीविरहितस्य पुरूरवस उक्तिरियम् । हे सर्वक्षितिभृतां सर्वपर्वतानां नाथ ! पर्वतश्रेष्ठ ! अस्मिन् रम्ये वनान्ते वनभूमौ मया विरहिता सर्वाङ्गसुन्दरी रामा उर्वशी त्वया दृष्टा ? अत्रास्य वाक्यस्य प्रतिध्वनेश्च साम्यात् दृष्टेति वाक्यस्य प्रश्नरूप एकोऽर्थः पुनर्दृष्टेति प्रतिध्वनिः प्रतिवचनरूपो अपरोऽर्थः इति अनेकार्थयोजनं बोद्धव्यम् ।

(च) छलमाह प्रियाभैरिति । प्रियाभैः प्रियसदृशैः अप्रियैः वाक्यैः विलोभ्य छलनं प्रतारणं छलम् ।

(छ) उदाहरति यथेति । कर्त्तेति । द्यूतच्छलानां द्यूतक्रीडारूपकपटानां कर्त्ता, जतुमयं यत् शरणं गृहं, शरणं गृहरक्षित्रोरित्यमरः । तस्य उद्दीपनः जतुगृहदाहक इत्यर्थः, अभिमानी अहङ्कारवान्, दुःशासनादेः दुःशासनप्रभृतेरस्य अनुजशतस्य कनिष्ठभ्रातृशतस्य गुरुः, अङ्गराजस्य कर्णस्य मित्रं बन्धुः,

**अन्ये त्वाहुश्छलं किञ्चित् कार्य्यमुद्दिश्य कस्यचित्।**
**उदीर्य्यते यद्वचनं वञ्चना हास्यरोषकृत्॥ [ ज ]**
**वाक्केलिर्हास्यसम्बन्धो द्वित्रिप्रत्युक्तितो भवेत्॥**
**५२५॥ [ झ ]**

द्वित्रीत्युपलक्षणं यथा।

"भिक्षो! मांसनिषेवणं प्रकुरुषे? किन्तेन मद्यं विना
मद्यञ्चापि तव प्रियम्? प्रियमहो! वाराङ्गनाभिः सह।
वेश्याप्यर्थरुचिः कुतस्तव धनम्? द्यूतेन चौर्य्येण वा
चौर्य्यद्यूतपरिग्रहोऽपि भवतः? नष्टस्य कान्या गतिः" ॥ (ञ)

केचित् "प्रक्रान्तवाक्यस्य साकाङ्क्षस्यैव निवृत्तिर्वाक्केलिः" इत्याहुः। अन्ये च "अनेकस्य प्रश्नस्यैकमुत्तरम्"।

**अन्योन्यवाक्याधिक्योक्तिः**
**स्पर्द्धयाधिबलं मतम्॥ ५२६॥ [ट]**

---

कृष्णायाः द्रौपद्याः केशानाम् उत्तरीयस्य च व्यपनयने आकर्षणे पटुः नियोजयिता इत्यर्थः, पाण्डवाः यस्य दासाः किङ्कराः, सः प्रसिद्धः असौ राजा दुर्योधनः क्व कुत्र आस्ते तिष्ठति कथयत यूयमिति शेषः। भृत्यान् प्रत्युक्तिरियम्। आवां भीमार्जुनावित्यर्थः रुषा क्रोधेन द्रष्टुं साक्षात्कर्त्तुं न अभ्यागतौ उपस्थितौ स्वः।

( ज ) अन्ये त्विति। कस्यचित् किञ्चित् कार्य्यमुद्दिश्य वञ्चनाहास्यरोषकरं यत् वचनम् उदीर्य्यते कथ्यते अन्ये पण्डितास्तु तत् छलम् आहुः कथयन्ति।

( झ ) वाक्केलिमाह वाक्केलिरिति। द्वे वा तिस्रो वा प्रत्युक्तयः प्रतिवचनानि ताभ्यः यः हास्यसम्बन्धः स वाक्केलिर्भवेत्।

( ञ ) उदाहरति यथेति। स्पष्टम्।

( ट ) अधिबलमाह अन्योन्येति। स्पर्द्धया अहङ्कारेण अन्योन्यं परस्परं वाक्यस्य आधिक्येन उक्तिः अधिबलं मतम्।

यथा मम प्रभावत्यां "वज्रनाभः ।
अस्य वक्षः क्षणेनैव निर्मथ्य गदयानया ।
लीलयोन्मूलयिष्यामि भुवनद्वयमद्य वः" ॥ (ठ)

प्रद्युम्नः । अरेरे असुरापसद ! (ड) अलममुना बहुप्रलापेन मम खलु ।

अद्य प्रचण्डभुजदण्डसमर्पितोरु-
कोदण्डनिर्गलितकाण्डसमूहपातैः ।
आस्तां समस्तदितिजक्षतजोक्षितेयं
क्षौणी क्षणेन पिशिताशनलोभनीया" ॥ (ढ)

गण्डं प्रस्तुतसम्बन्धि
भिन्नार्थं सत्वरं वचः ॥ ५२७ ॥ [ ण ]

यथा वेण्यां "राजा ।
अध्यासितुं तव चिराज्जघनस्थलस्य
पर्याप्तमेव करभोरु ! ममोरुयुग्मम्" ॥ (त)

---

( ठ ) उदाहरति यथेति । अस्येति । अस्य प्रद्युम्नस्य वक्षः क्षणेनैव अनया हस्तस्थितयेति भावः गदया निर्मथ्य चूर्णयित्वेत्यर्थः लीलया अवहेलया अद्य वः युष्माकं युष्माननादृत्येत्यर्थः अनादरे षष्ठी । भुवनद्वयं स्वर्गं पृथिवीञ्च इत्यर्थः स्वस्य पातालवासित्वादिति भावः उन्मूलयिष्यामि उत्पाटयिष्यामि ।

( ड ) असुरापसद ! असुराधम !

( ढ ) अद्येति । प्रचण्डे भुजदण्डे बाहुदण्डे समर्पितात् निहितात् उरु-कोदण्डात् महाधनुषः निर्गलितानां निर्गतानां काण्डानां शराणां समूहस्य पातैः इयं क्षौणी पृथ्वी क्षणेन समस्तानां दितिजानां दैत्यानां क्षतजैः रुधिरैः उक्षिता अभिषिक्ता सती पिशिताशनानां मांसभोजिनां लोभनीया स्पृहणीयेत्यर्थः आस्तां भवतु । वसन्ततिलकं वृत्तम् ।

( ण ) गण्डमाह गण्डमिति । प्रस्तुतसम्बन्धि प्रकृतार्थसम्बद्धं भिन्नार्थं पृथगर्थं सत्वरं त्वरान्वितं वचः गण्डम् ।

अनन्तरं प्रविश्य कञ्चुकी। "देव! भग्नं भग्नम्" इत्यादि। अत्र रथकेतनभङ्गार्थं वचनमूरुभङ्गार्थे सम्बन्धे सम्बद्धम्।

व्याख्यानं स्वरसोक्तस्या-

न्यथावस्यन्दितं भवेत्॥ ५२८॥ [थ]

यथा छलितरामे "सीता। जाद! कल्लं क्खु अओज्झाए गंतव्वं तहिं सो राआ विणएण पणयिदव्वो (३१)। लवः। अथ किमावाभ्यां राजोपजीविभ्यां भवितव्यम्। सीता। जाद! सो तुम्हाणं पिदा (३२)। लवः। किमावयोः रघुपतिः पिता? सीता। साशङ्कम्। मा अण्णधा संकधं णं क्खु तुम्हाणं सअलाए ज्जेव पुहवीएत्ति" (३३)। (द)

प्रहेलिकैव हास्येन

युक्ता भवति नालिका॥ ५२९॥ [ध]

---

(३१) जादेति। पुत्र! कल्य खलु अयोध्यायां गन्तव्यं तहिं स राजा विनयेन प्रणयितव्य इति सं०।

(३२) पुत्र! स युष्माकं पितेति सं०।

(३३) मा अन्यथा शङ्केथां न खलु युवयोः सकलाया एव पृथिव्या इति सं०।

---

(त) उदाहरति। यथेति। अध्यासितुमिति। भानुमतीं प्रति दुर्योधनवचनम्। हे वरभीरु! मम ऊरुयुग्मं चिरात् चिरकालं व्याप्य तव जघनस्थलस्य अध्यासितुम् अधिष्ठातुं पर्याप्तमेव समुचितमेव। अत्र रथकेतनभङ्गरूपभिन्नार्थं वचनं प्रस्तुतस्य दुर्योधनोरुभङ्गरूपस्य अर्थस्य सूचकम्।

(थ) अवस्यन्दितमाह व्याख्यानमिति। स्वरसोक्तस्य स्वभावत उक्तस्य वाक्यस्य अन्यथा व्याख्यानम् अवस्यन्दितं भवेत्।

(द) उदाहरति यथेति। अत्र स्वभावोक्तस्य स युवयोः पितेति वाक्यस्य सकलायाः पृथिव्या इत्यनेन पितृशब्दस्य पालकरूपत्वेन अन्यथा व्याख्यानम्।

संवरणकार्य्युत्तरं प्रहेलिका। यथा रत्नावल्याम्। सुस-ङ्गता। सहि! जस्स किदे तुमं आअदा सो इदो ज्जेव चिट्ठदि। सागरिका। कस्स किदे अहं आअदा? सुसं। णं चित्तफलअस्स" (२४)। अत्र त्वं राज्ञः कृते आगतेत्यर्थः संवृत्तः (न)।

असत्प्रलापो यद्वाक्यमसम्बद्धं तथोत्तरम्।
अगृह्णतोऽपि मूर्खस्य पुरो यच्च हितं वचः॥
५३०॥ [प]

तत्राद्यं (फ) यथा मम प्रभावत्याम्। "प्रद्युम्नः। सह-कारवल्लीमवलोक्य सानन्दम्। अहो कथमिहैव।
अलिकुलमञ्जुकेशी परिमलबहुला रसावहा तन्वी।
किशलयपेशलपाणिः कोकिलकलभाषिणी प्रियतमा मे"। (ब)

---

(२४) सहीति। सखि! यस्य कृते त्वमागता स इत एव तिष्ठतीति सं०। कस्य कृते अहमागतेति सं०। ननु चित्रफलकस्येति सं०।

---

(ध) नालिकमाह प्रहेलिकैवेति। हास्येन युक्ता प्रहेलिका एव नालिका भवति।

(न) उदाहरति यथेति। अत्र राज्ञः कृते त्वमागतेति उत्तरं संवृत्तम्।

(प) असत्प्रलापमाह असत्प्रलाप इति। असम्बद्धं पूर्वापरसम्बन्धरहितं यत् वाक्यं तथा उत्तरं यच्च अगृह्णतः हितवाक्यमगृह्णत इत्यर्थः मूर्खस्य पुरः अग्रतः हितं वचः असौ असत्प्रलापः।

(फ) आद्यम् असम्बद्धं वाक्यमित्यर्थः।

(ब) अलीति। अलिकुलं भ्रमरसमूहः तद्वत् मञ्जुकेशी मनोहरकेशा, परिमलः सौरभः तद्बहुला अतिसौरभशालिनीत्यर्थः, रसम् अनुरागम् आवह-तीति तथोक्ता अनुरागवतीत्यर्थः, तन्वी कृशाङ्गी, किशलयः पल्लवः तद्वत् पेशलः कोमलः पाणिर्यस्यास्तादृशी, कोकिलवत् कलभाषिणी मधुरभाषिणी मे मम प्रियतमा अतिप्रियेत्यर्थः। अत्र सहकारलतायां स्वप्रियाबुद्धिरसम्बद्धा।

एवमसम्बद्धोत्तरेऽपि। तृतीयं यथा वेण्यां दुर्य्योधनं प्रति गान्धारीवाक्यम्।

व्याहारो यत् परस्यार्थे
हास्यक्षोभकरं वचः॥ ५३१॥ [भ]

यथा मालविकाग्निमित्रे। लास्यप्रयोगावसाने मालविका निर्गन्तुमिच्छति। "विदूषकः। मा दाव उपदेससुध्वा गमिस्ससि" (३५) इत्युपक्रमेण। "दासः। विदूषकं प्रति। आर्य्य! उच्यतां यस्त्वया क्रमभेदो लक्षितः। विदूषकः। पढ़मं बह्मणपूआ भोदि सा इमाए लङ्घिदा (३६)। मालविका। स्मयत" इत्यादिना नायकस्य विशुद्धनायिकादर्शनप्रयुक्तेन हासलोभकारिणा वचसा व्याहारः (म)।

दोषा गुणा गुणा दोषा
यत्र स्युर्मृदवं हि तत्॥ ५३२॥ [य]

क्रमेण यथा।

"प्रिय! जीवितता क्रौर्य्यं निःस्नेहत्वं कृतघ्नता।
भूयस्तद्दर्शनादेव ममैते गुणतां गताः॥ (र)

(३५) मा तावदुपदेशशुद्धा गमिष्यसीति सं०।

(३६) प्रथमं ब्राह्मणपूजा भवति साऽनया लङ्घितेति सं०।

(भ) व्याहारमाह व्याहार इति। परस्य अर्थे निमित्तं यत् हास्यक्षोभकरं वचः असौ व्याहारः।

(म) उदाहरति यथेति। स्पष्टम्।

(य) मृदवमाह दोषा इति। यत्र वाक्ये दोषाः गुणाः गुणाः दोषाश्च स्युः तत् मृदवम्।

(र) उदाहरति प्रियेति। हे प्रिय! जीवितता त्वद्विरहे जीवनमित्यर्थः क्रौर्य्यं निठुरता, निःस्नेहत्वं स्नेहशून्यता, तथा कृतघ्नता उपकारिणोऽपकारकरणं

तस्यास्तद्रूपसौन्दर्य्यं भूषितं यौवनश्रिया।
सुखैकतायनं जातं दुःखायैव ममाधुना" ॥ (ल)

इति चाङ्गानि नाटकादिषु सम्भवत्यपि वीथ्यामवश्यं विधेयानि। विस्पष्टतया नाटकादिषु विनिविष्टान्यपीहोदाहृतानि वीथी च। नानारसानामत्र मालारूपतया स्थितत्वाद्वीथीयम्। यथा मालविका। अथ प्रहसनम्।

भाणवत्सन्धिसन्ध्यङ्गलास्याङ्गाङ्कैर्विनिर्मितम्।
भवेत् प्रहसनं वृत्तं निन्द्यानां कविकल्पितम् ॥ ५३३ ॥

अत्र नारभटी नापि विष्कम्भकप्रवेशकौ।

अङ्गी हास्यरसस्तत्र
वीथ्यङ्गानि स्थितिर्न वा ॥ ५३४ ॥

तत्र।

तपस्विभगवद्विप्रप्रभृतिष्वत्र नायकः। [व]

---

देहो जीवस्य मित्रभूतः तव विरहे देहे जीवनस्थितिरतीव क्लेशवहा, तस्मात् तदानीं जीवनस्य देहादपगमः श्रेयान् नो चेत् तस्य क्लैव्यादिकमवश्यवक्तव्यमिति भावः। भूयः पुनः त्वद्दर्शनात् तव दर्शनं प्राप्येत्यर्थः मम एते, जीवनस्य क्लैव्यादयः गुणताम् अनुकूलतां गताः। अत्र दोषाणां गुणत्वम्।

(ल) तस्या इति। बन्धुं प्रति नायकस्योक्तिरियम्। तस्याः कान्तायाः यौवनश्रिया तारुण्यलक्ष्म्या भूषितं विराजितं तत् रूपसौन्दर्यं मम सुखैकतायनं सुखमात्राधारं जातम् अधुना विरहे इत्यर्थः दुःखाय एव। अत्र गुणानां दोषत्वम्।

(व) प्रहसनमाह भाणेति। भाणेति। भाणवत् भाण इव भाणे यथा मुखं निर्वहणञ्च सन्धी सन्ध्यङ्गानि च बहूनि, लास्याङ्गानि च दश; तथात्रापीति भावः। अत्र प्रहसने आरभटी वृत्तिर्न प्रयोज्येति शेषः। वीथ्यङ्गानां स्थितिरत्र-

एको यत्र भवेत् धृष्टो हास्यं तच्छुद्धमुच्यते ॥

५३५ ॥ [श]

यथा कन्दर्पकेलिः।

आश्रित्य कञ्चन जनं संकीर्णमिति तद् विदुः ॥

५३६ ॥ [ष]

यथा धूर्त्तचरितम्।

वृत्तं बहूनां धृष्टानां संकीर्णं केचिदूचिरे।
तत् पुनर्भवति द्व्यङ्कमथवैकाङ्कनिर्मितम् ॥

५३७ ॥ [स]

यथा नटकमेलकादि। मुनिस्त्वाह।
"वेश्याचेटनपुंसकविटधूर्त्ता बन्धकी च यत्र स्युः।
अविकृतवेशपरिच्छदचेष्टितकरणन्तु सङ्कीर्णमिति" ॥ (ह)

---

स्थानं न वा नैव, अथवा वीथ्यङ्गानां स्थितिः नियतेत्यर्थः। अत्र प्रहसने नृपस्यादिषु मध्ये कश्चित् नायकः। अत्र भगवच्छब्देन सन्न्यासी प्रोच्यते। अन्यत् सुगमम्।

(श) अस्य भेदत्रयमाह एक इत्यादि। यत्र एकः मुख्यः नायक इत्यर्थः धृष्टः प्रगल्भः भवेत् तत् हास्यं शुद्धम् उच्यते।

(ष) आश्रित्येति। कञ्चन जनं धृष्टभिन्नमिति भावः आश्रित्य यत् हास्यं तत् सङ्कीर्णं विदुः।

(स) वृत्तमिति। बहूनां धृष्टानां वृत्तं चरितं केचित् सङ्कीर्णम् ऊचिरे उक्तवन्तः। तत् सङ्कीर्णप्रहसनं द्व्यङ्कम् अङ्गद्वयघटितं वा एकेनैव अङ्केन विनिर्मितं भवति।

(ह) वेश्येति। यत्र प्रहसने वेश्यादीनां वर्णनं तथा तेषामविकृतानां यथास्थितानामिति भावः वेशानां परिच्छदानां चेष्टितानाञ्च करणम् अनुकरणमित्यर्थः तत् सङ्कीर्णम्।

विकृतन्तु विदुर्यत्र षण्डकञ्चुकितापसाः ।
भुजङ्गचारणभटप्रभृतेर्वेशवाग्युताः ॥५३८॥ [च]

इदन्तु सङ्कीर्णेनैव गतार्थमिति मुनिना पृथग्नोक्तम् । अथोपरूपकाणि । तत्र ।

नाटिका क्लृप्तवृत्ता स्यात् स्त्रीप्राया चतुरङ्किका ।
प्रख्यातो धीरललितस्तत्र स्यान्नायको नृपः ॥
स्यादन्तःपुरसम्बन्धा सङ्गीतव्यापृताऽथवा ।
नवानुरागा कन्यात्र नायिका नृपवंशजा ॥
सम्प्रवर्त्तेत नेतास्यां देव्यास्त्रासेन शङ्कितः ।
देवी पुनर्भवेज्ज्येष्ठा प्रगल्भा नृपवंशजा ॥
पदे पदे मानवती तद्वशः सङ्गमो द्वयोः ।
वृत्तिः स्यात् कौशिकी स्वल्पविमर्षाः सन्धयः पुनः ॥५३९॥ [क]

द्वयोर्नायकनायिकयोः । यथा रत्नावलीविद्धशालभञ्जिकादि । अथ त्रोटकम् ।

---

(च) विकृतमिति । तत्र षण्डकञ्चुकितापसाः भुजङ्गस्य विटस्य चारणस्य भटस्य भटादेरिव वेशयुक्ताः वचनयुक्ताश्च भवेयुः तत् हास्यं विकृतं विदुः ।

(क) उपरूपकाण्याह अथेति । नाटिकेति । क्लृप्तवृत्ता कल्पितवृत्तान्ता न तु पुराणादिषु प्रसिद्धवृत्तेति भावः, स्त्रीप्राया नारीबहुला, चतुरङ्किका चतुर्भिरङ्कैः सम्पाद्या इत्यर्थः । प्रख्यातः, प्रसिद्धः धीरललितः निश्चिन्तो मृदुरनिशमिति लक्षणोक्तः, अन्तःपुरसम्बन्धा अन्तःपुरसम्बन्धवती अन्तःपुरचारिणीत्यर्थः । नेता नायकः देव्याः महिष्याः त्रासेन भयेन शङ्कितः सन् अस्यां नायिकायां सम्प्रवर्त्तेत समासज्जेत् । द्वयोः नायिकानायकयोः सङ्गमः तद्वशः देव्यधीनः । स्वल्पविमर्षाः प्रायेण विमर्षाख्यसन्धिहीना इत्यर्थः । अन्यत् सुगमम् ।

सप्ताष्टनवपञ्चाङ्कं दिव्यमानुषसंश्रयम्।
त्रोटकं नाम तत् प्राहुः प्रत्यङ्कं सविदूषकम्॥

५४०॥ [ख]

प्रत्यङ्कं सविदूषकत्वादेवात्र शृङ्गारोऽङ्गी। सप्ताङ्कं यथा स्तम्भितरम्भम्। पञ्चाङ्कं यथा विक्रमोर्वशी। अथ गोष्ठी।

प्राकृतैर्नवभिः पुंभिर्दशभिर्वाप्यलङ्कृता।
नोदात्तवचना गोष्ठी कौशिकीवृत्तिशालिनी॥
हीना गर्भविमर्षाभ्यां पञ्चषड्योषिदन्विता।
कामशृङ्गारसंयुक्ता स्यादेकाङ्कविनिर्मिता॥

५४१॥ [ग]

यथा रैवतमदनिका। अथ सट्टकम्।

सट्टकं प्राकृताशेषपाठ्यं स्यादप्रवेशकम्।
न च विष्कम्भकोऽप्यत्र प्रचुरश्चाद्भुतो रसः।
अङ्का जवनिकाख्याः स्युः स्यादन्यन्नाटिकासमम्

॥५४२॥ [घ]

---

(ख) त्रोटकमाह सप्तेति। सप्तेति। सप्त वा अष्टौ वा नव वा पञ्च वा अङ्काः यत्र तथोक्तं, दिव्यमानुषसंश्रयं देवमनुष्यसम्बद्धं, प्रत्यङ्कं, विदूषकचरित्रसहितं नाट्यं त्रोटकं प्राहुः।

(ग) गोष्ठीमाह अथेति। प्राकृतैरिति। प्राकृतैः नातिविदग्धैः। नोदात्तवचना संस्कृतानभिभाषिणी। अन्यत् स्पष्टम्।

(घ) सट्टकमाह अथेति। सट्टकमिति। प्राकृतं संस्कृतादन्यत् अशेषं समस्तं पाठ्यं वाक्यं यस्मिन् तत् अप्रवेशकं प्रवेशकवर्जितम् प्रचुरः बहुलः।

यथा कर्पूरमञ्जरी । अथ नाट्यरासकम् ।

नाट्यरासकमेकाङ्कं वहुताललयस्थितिः ।
उदात्तनायकं तद्वत् पीठमर्दोपनायकम् ॥
हास्योऽङ्ग्यत्र सशृङ्गारो नारी वासकसज्जिका ।
मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च ॥
केचित् प्रतिमुखं सन्धिमिह नेच्छन्ति केवलम् ॥

५४३ ॥ [ङ]

तत्र सन्धिद्वयवती यथा नर्मवती । सन्धिचतुष्टयवती यथा विलासवती । अथ प्रस्थानम् ।

प्रस्थाने नायको दासो हीनः स्यादुपनायकः ।
दासी च नायिका वृत्तिः कौशिकी भारती तथा ॥
सुरापानसमायोगादुद्दिष्टार्थस्य संहृतिः ।
अङ्कौ द्वौ लयतालादिर्विलासो वहुलस्तथा ॥

५४४ ॥ [च]

---

यवनिकाख्याः पटाः प्रयोज्याः पटस्थाने जवनिकाशब्दः प्रयोज्य इत्यर्थः । अन्यत् पदसंख्यादिकम् ।

(ङ) नाट्यरासकमाह एकेति । नाट्येति । बहौ तालस्य तालक्रियामानस्य लयस्य साम्यस्य च स्थितिर्यस्मिन् तत्, तालः कालक्रियामानः लयः साम्यमित्यमरः । उदात्तनायकं धीरोदात्तनायकयुतं, पीठमर्दः पूर्वोक्तलक्षणः उपनायकः नायकसहकारी यत्र तत् । सशृङ्गारः शृङ्गाररससहितः हास्यः अत्र अङ्गी प्रधानम् । वासकसज्जिका पूर्वोक्तलक्षणा । अन्यत् स्पष्टम् ।

(च) प्रस्थानमाह प्रस्थाने इति । प्रस्थान० इति । हीनः दासादपि इतर इत्यर्थः । सुरापानसमायोगात् मद्यपानवशात् उद्दिष्टस्य प्रस्तुतस्य अर्थस्य इतिवृत्तस्य संहृतिः समापनम् । अन्यत् सुगमम् ।

यथा शृङ्गारतिलकम्। अथोल्लाप्यम्।

उदात्तनायकं दिव्यवृत्तमेकाङ्कभूषितम्।
शिल्पकाङ्गैर्युतं हास्यशृङ्गारकरुणैः रसैः॥ [छ]
उल्लाप्यं बहुसंग्रामं व्यस्तगीतिमनोहरम्।
चतस्रो नायिकास्तत्र त्रयोऽङ्का इति केचन॥
५४५॥ [ज]

शिल्पकाङ्गानि वक्ष्यमाणानि। यथा देवीमहादेवम्।

अथ काव्यम्।

काव्यमारभटीहीनमेकाङ्कं हास्यसङ्कुलम्।
खण्डमात्रा द्विपदिका भग्नतालैरलङ्कृतम्॥
वर्णमात्राच्छड्डलिकायुतं शृङ्गारभाषितम्।
नेता स्त्री चाप्युदात्तात्र सन्धी आद्यौ तथान्तिमः
॥५४६॥ [झ]

---

(छ) उल्लाप्यमाह अथेति। उदात्तेति। उदात्तः धीरोदात्तः नायको यत्र तत्, दिव्यवृत्तं दिव्यचरित्रयुक्तम्। अन्यत् स्पष्टम्।

(ज) उल्लाप्यमिति। व्यस्तेन विभागेन इति भावः गीतेन मनोहरम्। केचन पण्डिता इदम् उल्लाप्यं वदन्तीति शेषः।

(झ) काव्यमाह अथेति। काव्यमिति। आरभटी वृत्तिविशेषः तया हीनं खण्डमात्रा द्विपदिका भग्नतालैः तत्तदाख्यगीतविशेषैरित्यर्थः वर्णमात्रा अथाच्छड्डणिका छन्दोभेदौ ताभ्यां युतं, शृङ्गारभाषितं शृङ्गारसूचकवाक्यसमन्वितम्। नेता नायकः स्त्री नायिका च उदात्तः उदात्ता च। अत्र काव्ये आद्यौ मुखप्रतिमुखे इत्यर्थः अन्तिमः निर्वहणमित्यर्थः। अन्यत् सुगमम्।

यथा यादवोदयः। अथ प्रेङ्खणम्।

गर्भावमर्शरहितं प्रेङ्खणं हीननायकम्।
असूत्रधारमेकाङ्कमविष्कम्भप्रवेशकम्।
नियुद्धसम्फेटयुतं सर्ववृत्तिसमाश्रितम्।
नेपथ्ये गीयते नान्दी तथा तत्र प्ररोचना॥
५४७॥ [ञ]

यथा वालिवधः। अथ रासकम्।

रासकं पञ्चपात्रं स्यान्मुखनिर्वहणान्वितम्।
भाषाविभाषाभूयिष्ठं भारती कैशिकीयुतम्॥
असूत्रधारमेकाङ्कं सवीथ्यङ्गं कलान्वितम्।
श्लिष्टनान्दीयुतं ख्यातनायिकं मूर्खनायकम्॥
उदात्तभावविन्यासंश्रितं चोत्तरोत्तरम्।
इह प्रतिमुखं सन्धिमपि केचित् प्रचक्षते॥
५४८॥ [ट]

---

(ञ) प्रेङ्खणमाह अथेति। गर्भेति। गर्भविमर्शरहितं गर्भविमर्शसन्धिद्वयवर्जितं, हीनः प्राकृतः नायको यत्र तत्, नियुद्धः सम्फेटः तयोर्भावश्च ताभ्यां युतं, सर्वाभिर्वृत्तिभिः कैशिक्यादिभिः समाश्रितं युक्तम्। प्ररोचना प्रकृतप्रशंसया सामाजिकानाम् उन्मुखीकरणम्। असूत्रधारत्वेऽपि नेपथ्यस्थेन केनचित् नान्दी प्ररोचना च पठनीयेति भावः।

(ट) रासकमाह अथेति। रासकमिति। पञ्चपात्रं पञ्चभिः पात्रैः नटैः सम्पाद्यमित्यर्थः, भाषया विभाषया च संस्कृतेन प्राकृतेन च द्रव्यैः भूयिष्ठं प्रचुरम्। कला नृत्यादिका चतुःषष्टिप्रकारा तया अन्वितं, श्लिष्टया भिन्नार्थया

यथा मेनकाहितम् । अथ संलापकम् ।

संलापकेऽङ्काश्चत्वारस्त्रयो वा नायकः पुनः ।
पाषण्डः स्याद्रसस्तत्र शृङ्गारकरुणेतरः ॥
भवेयुः पुरसंरोधच्छलसंग्रामविद्रवाः ।
न तत्र वृत्तिर्भवति भारती न च कौशिकी ॥

५४९ ॥ [ ठ ]

यथा मायाकापालिकम् । अथ श्रीगदितम् ।

प्रख्यातवृत्तमेकाङ्कं प्रख्यातोदात्तनायकम् ।
प्रसिद्धनायकं गर्भविमर्षाभ्यां विवर्जितम् ॥
भारतीवृत्तिबहुलं श्रीतिशब्देन संयुतम् ।
मतं श्रीगदितं नाम विद्वद्भिरुपरूपकम् ॥५५०॥

[ ड ]

यथा क्रीड़ारसातलम् ।

"श्रीरासीना श्रीगदिते गायेत् किञ्चित् पठेदपि ।

---

नाम्ना युतं, ख्याता प्रसिद्धा नायिका यत्र तत्, उदात्तभावस्य महत्त्वस्य विन्यासेन वर्णनेन संश्रितम् । अन्यत् स्पष्टम् ।

( ठ ) संलापकमाह अथेति । संलापक इति । पाषण्डः मूर्खः अधार्मिको वा । पुरसंरोधः नगरावरोधः छलं प्रियाभैरप्रियैर्वाक्यैश्छलनं छलमित्युक्तलक्षणं, संग्रामं युद्धं, विभ्रमः, मङ्गाभयत्रासकृतः सम्भ्रमो विभ्रमो मत इत्युक्तलक्षणः । अन्यत् स्पष्टम् ।

( ड ) श्रीगदितमाह अथेति । प्रख्यातेति । प्रख्यातवृत्तं पुराणादिषु प्रसिद्धवृत्तान्तम् । प्रसिद्धा नायिका यत्र तत् । श्री इति शब्देन संयुतं बहुशः श्रीशब्दप्रयोगयुतमित्यर्थः ।

एकाङ्को भारतीप्राय इति केचित्प्रचक्षते ॥ (ढ)

ऊह्यमुदाहरणम्। अथ शिल्पकम्।

चत्वारः शिल्पकेऽङ्काः स्युश्चतस्रो वृत्तयस्तथा।
अशान्तहास्याश्च रसा नायको ब्राह्मणो मतः ॥
वर्णनात्र श्मशानादेर्हीनः स्यादुपनायकः।
सप्तविंशतिरङ्गानि भवन्त्यत्रस्य तानि तु ॥
आशंसातर्कसन्देहतापोद्वेगप्रसक्तयः।
प्रयत्नग्रथनोत्कण्ठावहित्थाप्रतिपत्तयः ॥
विलासालस्यवाष्पाणि प्रहर्षाश्वासमूढताः।
साधनानुगमोच्छ्वासविस्मयाः प्राप्तयस्तथा ॥
लाभविस्मृतिसम्फेटा वैशारद्यं प्रबोधनम्।
चमत्कृतिश्चेत्यमीषां स्पष्टत्वाल्लक्ष्म नोच्यते ॥
५५१ ॥ [ण]

सम्फेटग्रथनयोः पूर्वमुक्तत्वादेव लक्ष्म सिद्धम्। यथा कनकावतीमाधवः। अथ विलासिका।

---

(ढ) श्रीरिति। श्रीगदिते आसीना उपविष्टा श्रीः श्रीवेशधारिणी नटीत्यर्थः किञ्चित् गायेत् पठेदपि। तथा एकाङ्कः एकेनैव अङ्केन समाप्तः भारतीप्रायः भारतीवृत्तिबहुलः सन्दर्भ इति केचित् पण्डिताः प्रवदन्ते।

(ण) शिल्पकमाह चत्वार इति। वृत्तयः कौशिक्यादयः अशान्तहास्याः शान्तहास्याभ्यामन्ये इत्यर्थः। उपनायकः नायकसहकारी हीनः इतरः। एतस्य शिल्पकस्य आशंसादीनि चमत्कृत्यन्तानि सप्तविंशतिः अङ्गानि। अमीषाम् अङ्गानां स्पष्टत्वात् सहजत्वात् लक्ष्म लक्षणं न उच्यते। सम्फेटो रोषभाषणम् उपन्यासस्तु कार्याणामित्युक्तलक्षणं ग्रथनम्।

शृङ्गारबहुलैकाङ्का दशलास्याङ्गसंयुता।
विदूषकविटाभ्याञ्च पीठमर्देन भूषिता॥
हीना गर्भविमर्षाभ्यां सन्धिभ्यां हीननायका।
स्वल्पवृत्ता सुनेपथ्या विख्याता सा विलासिका॥
५५२॥ [ त ]

केचित् तत्र विलासिकास्थाने "लासिका" इति पठन्ति तस्यास्तु "दुर्मल्लिकायामन्तर्भावः" इत्यन्ये। अथ दुर्मल्लिका।

दुर्मल्ली चतुरङ्का स्यात् कौशिकी भारती तथा।
अगर्भा नागरनराऽन्यूननायकभूषिता॥
त्रिनालिः प्रथमोऽङ्कोऽस्यां विटक्रीड़ामयो भवेत्।
पञ्चनालिर्द्वितीयोऽङ्को विदूषकविलासवान्॥
षण्णालिकस्तृतीयस्तु पीठमर्दविलासवान्।
चतुर्थो दशनालिः स्यादङ्कः क्रीड़ितनायकः॥
५५३॥ [ थ ]

---

( त ) विलासिकामाह अथेति। शृङ्गारेति। स्वल्पानि नातिबहुलानि वृत्तानि पद्यानि यत्र तादृशी। अन्यत् स्पष्टम्।

( थ ) दुर्मल्लिकामाह अथेति। दुर्मल्लीति। अगर्भा गर्भसन्धिवर्जिता। नागरनरात् अन्यूनेन अनिकृष्टेन नायकेन भूषिता। अस्यां प्रथमः अङ्कः त्रिनालिः घटिकात्रयसाध्यः विटस्य क्रीड़ामयः केलिबहुलः। पञ्चनालिः पञ्चघटिकासम्पाद्यः। षण्णालिकः घटिकाषट्कसम्पादनीयः। दशनालिः दशघटिकानिर्वाह्यः। अन्यत् स्पष्टम्।

यथा विन्दुमती। अथ प्रकरणिका।

नाटिकैव प्रकरणी सार्थवाहादिनायका।
समानवंशजा नेतुर्भवेद् यत्र च नायिका ॥५५४॥
[द]

मृग्यमुदाहरणम्। अथ हल्लीशः।

हल्लीश एव एकाङ्कः सप्ताष्टौ दश वा स्त्रियः।
वागुदात्तैकपुरुषः कौशिकीवृत्तिसङ्कुलः॥
मुखान्तिमौ तथा सन्धी बहुताललयस्थितिः॥
५५५॥ [ध]

यथा केलिरैवतकम्। अथ भाणिका।

भाणिका श्लक्ष्णनेपथ्या मुखनिर्वहणान्विता।
कौषिकीभारतीवृत्तियुक्तैकाङ्कविनिर्मिता।
उदात्तनायिका मन्दपुरुषोऽत्राङ्कसप्तकम्।
उपन्यासोऽथ विन्यासो विवोधः साध्वसं तथा।
समर्पणं निवृत्तिश्च संहार इति सप्तमः॥ [न]

---

(द) प्रकरणिकामाह अथेति। नाटिकैवेति। सार्थवाहो वणिक्। अन्यत् स्पष्टम्।

(ध) हल्लीशमाह अथेति। हल्लीश इति। वागुदात्तः संस्कृतभाषया रहित इत्यर्थः, एकपुरुषः एकमात्रनटः। मुखान्तिमौ आद्यचरमौ मुखनिर्वहणे इत्यर्थः। अन्यत् स्पष्टम्।

(न) भाणिकामाह अथेति। भाणिकेति। श्लक्ष्णनेपथ्या परिष्कृतपरि-

उपन्यासः प्रसङ्गेन भवेत् कार्य्यस्य कीर्त्तनम् ॥
निर्वेदवाक्यव्युत्पत्तिर्विन्यास इति स स्मृतः ।
भ्रान्तिनाशो विबोधः स्यान्मिथ्याख्यातन्तु
साध्वसम् ॥
सोपालम्भवचः कोपपीड़येह समर्पणम् ।
निदर्शनस्योपन्यासो निवृत्तिरिति कथ्यते ॥
संहार इति च प्राहुर्यत् कार्य्यस्य समापनम् ॥
५५६ ॥ [ प ]

स्पष्टान्युदाहरणानि । यथा कामदत्ता । एषां सर्वेषामपि नाटकप्रकृतिकत्वेऽपि यथौचित्यं यथालाभं नाटकोक्तविशेषपरिग्रहः । यत्र च नाटकोक्तस्यापि पुनरुपादानं तत्र तत्सद्भावस्य नियमः । अथ श्रव्यकाव्यानि ।

श्रव्यं श्रोतव्यमात्रं तत् पद्यगद्यमयं द्विधा ॥५५७॥

---

च्छंदा । मन्दः हीनः पुरुषः नायकः यस्यां तादृशी । अङ्कसप्तकम् उपन्यासादीनि संहारान्तानि सप्त यस्याः अङ्गानीत्यर्थः ।

(प) उपन्यासादीनाह उपन्यास इति । उपन्यास इत्यादिप्रसङ्गेन कार्य्यस्य कीर्त्तनं सूचनम् उपन्यासः भवेत् । निर्वेदः तत्त्वज्ञानापद्दोषादेरित्युक्तलक्षणः तस्य वाक्ये तत्सूचकवचसि व्युत्पत्तिः विशेषज्ञता विन्यासः इति स्मृतः । भ्रान्तेर्भ्रमस्य अज्ञानस्य इत्यर्थः नाशः विच्छेदः विरोधः स्यात् । मिथ्या आख्यातं कथनं साध्वसम् । इह भाणिकायां कोपेन पीड़या वा सोपालम्भवचः तिरस्कारवचनं समर्पणम् । निदर्शनस्य दृष्टान्तस्य उपन्यासः कीर्त्तनं निवृत्तिरिति कथ्यते । कार्य्यस्य यत् समापनं तत् संहार इति कथ्यते ।

(फ) श्रव्यकाव्यान्याह श्रव्येति । श्रव्यमिति । श्रोतव्यमात्रमितिमात्र-

तत्र पद्यमयान्याह।

छन्दोबद्धपदं पद्यं तेनैकेन च मुक्तकम्।
द्वाभ्यान्तु युग्मकं सन्दानितकं त्रिभिरिष्यते॥
कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतम्॥
५५८॥ [फ]

तत्र मुक्तकं यथा मम।

"सान्द्रानन्दमनन्तमव्ययमजं यद्योगिनोऽपि क्षणं
साक्षात्कर्त्तुमुपासते प्रति मुहुर्ध्यानैकतानाः परम्।
धन्यास्ता मथुरापुरीयुवतयस्तद् ब्रह्म याः कौतुकाद्
आलिङ्गन्ति समालपन्ति शतधा कर्षन्ति चुम्बन्ति च"॥ (ब)

युग्मकं यथा मम।

"किं करोषि करोपान्ते कान्ते! गण्डस्थलीमिमाम्।
प्रणयप्रवणे कान्तेऽनैकान्ते नोचिताः क्रुधः॥
इति यावत् कुरङ्गाक्षीं वक्तुमीहामहे वयम्।

---

शब्देन दृश्यकाव्यव्यवच्छेदः। छन्दोभिः गायत्र्यादिभिः बद्धानि रचितानि पदानि सुप्तिङन्तरूपाणि यत्र तादृशम्। एकेन तेन पद्येन। अन्यत् स्पष्टम्।

(ब) मुक्तकमुदाहरति सान्द्रेति। मुहुः पुनः पुनः ध्यानैकतानाः समाधिनिष्ठा योगिनः अपि सान्द्रानन्दम् आनन्दघनम् अनन्तम् अव्ययम् अच्युतम् अजं जन्मरहितं परं यत् ब्रह्म क्षणं साक्षात् कर्त्तुम् उपासते वाञ्छन्ति, ताः मथुरापुरीयुवतयः धन्याः पुण्यवत्यः याः तत् परं ब्रह्म कौतुकात् आनन्दात् शतधा बहुधा इत्यर्थः आलिङ्गन्ति समालपन्ति कर्षन्ति चुम्बन्ति च। शार्दूलविक्रीडितं वृत्तम्।

(भ) किमिति। हे कान्ते! करस्य उपान्ते प्रान्तभागे तले इत्यर्थः इमां गण्डस्थलीं किं कथं करोषि, न एकान्तः एकावधानं यस्य सः नैकान्तः अनावधान इति यावत् स न भवतीति अनैकान्तः तस्मिन् त्वन्मात्रवल्लभे इत्यर्थः प्रणयप्रवणे

तावदाविरभूच्चूतो मधुरो मधुपध्वनिः॥ (भ)

एवमन्यत्रापि।

सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः।
सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वितः॥
एकवंशभवा भूपाः कुलजा बहवोऽपि वा।
शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते॥
अङ्गानि सर्वेऽपि रसाः सर्वे नाटकसन्धयः।
इतिहासोद्भवं वृत्तमन्यद् वा सज्जनाश्रयम्॥
चत्वारस्तस्य वर्गाः स्युस्तेष्वेकञ्च फलं भवेत्।
आदौ नमःक्रियाशीर्वा वस्तुनिर्देश एव वा॥
क्वचिन्निन्दा खलादीनां सताञ्च गुणकीर्त्तनम्।
एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः॥

---

प्रणयाकाङ्क्षिणीत्यर्थः कान्ते क्रुधः कोपाः न उचिताः। इति एवंप्रकारेण यावत् वयं कुरङ्गाक्षीं मृगनयनां वक्तुम् ईहामहे चेष्टामहे तावत् चूते रसाले मधुरः मनोहरः मधुपध्वनिः भ्रमरझङ्कारः आविरभूत् अजायत भ्रमररवेणैव मानभङ्गो जातः नास्माकं प्रयासस्य आवश्यकतेति भावः।

(भ) महाकाव्यमाह सर्गबन्ध इति। सर्गैः अवान्तरार्थदर्शनैरुपलक्षितः बन्धः पद्यप्रबन्ध इत्यर्थः महाकाव्यम्। तत्र महाकाव्ये इत्यर्थः सुरः देवविशेषः। बहवः अनेके, नाटकसन्धयः नाटकोक्तमुखादिपञ्चकं प्रयोज्यमिति भावः। इतिहासेषु पुराणादिषु उद्भवम् उत्पन्नं वृत्तं चरितम्। सज्जनाश्रयं साधुजनाचरितमित्यर्थः। वर्गाः धर्मार्थकाममोक्षाः, तेषु चतुर्वर्गेषु मध्ये एकं फलं च इति चकारो वार्थः। भवेत्। आदौ महाकाव्यस्येति शेषः नमःक्रिया देवतादीनां नमस्कारः आशीर्वा शुभाशंसनं वा लोकानामिति शेषः। वस्तुनिर्देशः वस्तुनः इतिवृत्तस्यन्धिनः प्रधानस्य निर्देशः कीर्त्तनम्। खलादीनां दुर्जनादीनाम्।

ल्पा नातिदीर्घाः सर्गा अष्टाधिका इह ।
वृत्तमयः क्वापि सर्गः कश्चन दृश्यते ॥
न्ते भाविसर्गस्य कथायाः सूचनं भवेत् ।
न्ध्यासूर्य्येन्दुरजनीप्रदोषध्वान्तवासराः ॥
प्रातर्मध्याह्नमृगयाशैलर्त्तुवनसागराः ।
सम्भोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः ॥
रणप्रयाणोपयममन्त्रपुत्रोदयादयः ।
वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह ॥
कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा ।
नामास्य सर्गोपादेयकथया सर्गनाम तु ॥
५५६ ॥ [म]

सन्ध्यङ्गानि यथालाभमत्र विधेयानि, अवसानेऽन्यवृत्तकैरिति बहुवचनमविवक्षितम्। साङ्गोपाङ्गा इति जलकेलिमधुपानादयः। यथा रघुवंशशिशुपालवधनैषधादिः। यथा वा मम राघवविलासादिः।

---

एकवृत्तमयैः एकविधच्छन्दोनिबद्धैरित्यर्थः अवसाने सर्गसमाप्तौ अन्यवृत्तकैः भिन्नच्छन्दोविरचितैरित्यर्थः। इह महाकाव्ये। नानावृत्तमयः बहुभिश्छन्दोभिः रचित इत्यर्थः। यथायोगं यथासम्भवं साङ्गोपाङ्गाः अङ्गप्रत्यङ्गसहिताः। कवेः प्रणेतुः वा वृत्तस्य वर्णनीयस्य वा नायकस्य वा इतरस्य अन्यस्य नाम्ना अस्य महाकाव्यं नाम कर्त्तव्यमिति शेषः। तत्र कविनाम यथा माघभारविप्रभृति। वृत्तनाम यथा कुमारसम्भवादि। नायकनाम यथा रघुवंशादि। इतरनाम यथा भट्टिप्रभृति। तु किन्तु सर्गनाम सर्गे उपादेया वर्णनीया या कथा तया कर्त्तव्यमिति शेषः यथा रतिविलापो नाम चतुर्थः सर्ग इत्यादि।

अस्मिन्नार्षे पुनः सर्गाः
भवन्त्याख्यानसंज्ञकाः ॥ ५६० ॥ [ य ]

अस्मिन् महाकाव्ये। यथा महाभारतम्।

प्राकृतैर्निर्मिते तस्मिन् सर्गा आश्वाससंज्ञकाः।
छन्दसास्कन्दकेनैतत् क्वचिद्गलितकैरपि ॥
५६१ ॥ [ र ]

यथा सेतुबन्धः। यथा वा मम कुवलयाश्वचरितम्।

अपभ्रंशनिबन्धेऽस्मिन् सर्गाः कडवकाभिधाः।
तथापभ्रंशयोग्यानि छन्दांसि विविधान्यपि ॥
५६२ ॥ [ ल ]

यथा कर्णपराक्रमः।

भाषाविभाषानियमात् काव्यं सर्गसमुज्झितम्।
एकार्थप्रवणैः पद्यैः सन्धिसामग्र्यवर्जितम् ॥
५६३ ॥ [ व ]

---

( य ) अस्मिन्निति। आर्षे ऋषिप्रणीते अस्मिन् महाकाव्ये सर्गाः आख्यानसंज्ञकाः भवन्ति। सर्गस्थाने आख्यानशब्दः प्रयोज्य इति भावः।

( र ) प्राकृतैरिति। प्राकृतैः भाषाविशेषैः निर्मिते प्रणीते तस्मिन् महाकाव्ये। आस्कन्दकेन तदाख्येन एतत् प्राकृतं महाकाव्यमित्यर्थः। गलितकैः तदाख्यच्छन्दोविशेषैरित्यर्थः।

( ल ) अपभ्रंशेति। अपभ्रंशः अपभाषा तद्रचितनिबन्धः अस्मिन् महाकाव्ये।

( व ) काव्यमाह भाषेति। भाषा संस्कृतं विभाषा विरुद्धभाषा अपभ्रंशादिः तयोर्नियमात् भाषया रचिते न विभाषा विभाषया रचिते न भाषा प्रयोक्तव्या

यथा भिक्षाटनम् आर्य्याविलासश्च

खण्डकाव्यं भवेत् काव्य-
स्यैकदेशानुसारि च ॥ ५६४ ॥ [ अ ]

यथा मेघदूतादि।

कोषः श्लोकसमूहस्तु स्यादन्योन्यानपेक्षकः।
व्रज्याक्रमेण रचितः स एवातिमनोरमः॥
५६५ ॥ [ प ]

सजातीयानामेकत्र सन्निवेशो व्रज्या। यथा मुक्ता-वल्यादि। अथ गद्यकाव्यानि। तत्र गद्यम्।

वृत्तबन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च।
भवेदुत्कलिकाप्रायं चूर्णकं च चतुर्विधम्॥
आद्यं समासरहितं वृत्तभागयुतं परम्।

---

इति नियमेन रचितमिति शेषः सर्गबन्धसमुज्झितं सर्गबन्धरहितम् एकार्थप्रवणैः एकार्थप्रतिपादकैः एकवाक्यतापन्नैरिति यावत् पद्यैः रचितमिति शेषः सन्धि-सामग्र्यवर्जितं मुखप्रतिमुखादिसन्धिसमुदायहीनं काव्यम्।

( अ ) खण्डकाव्यमाह खण्डेति। काव्यस्य एकदेशानुसारि कियदंशानु-रूपमित्यर्थः काव्यं खण्डकाव्यं भवेत्।

( प ) कोषमाह कोष इति। अन्योन्यानपेक्षकः परस्परनिरपेक्षः श्लोकानां समूहः कोषः स कोषः व्रज्याक्रमेण सजातीयसन्निवेशनियमेन रचितश्चेत् अति-मनोहरः अतिप्रशंसनीय इत्यर्थः, यथा अमरकोषादिः।

( फ ) गद्यमाह वृत्तेति। वृत्तबन्धेन पद्यबन्धेन उज्झितं त्यक्तं श्रव्यकाव्यं गद्यं, तच्च चतुर्विधं—मुक्तकं, वृत्तगन्धि, उत्कलिकाप्रायं, चूर्णकञ्च। आद्यं, मुक्तकम्। परं वृत्तगन्धि वृत्तस्य पद्यस्य भागेन अंशेन युतम्, अन्यत् उत्कलिका-

**अन्यद्दीर्घसमासाढ्यं तुर्य्यं चाल्पसमासकम् ॥**

५६६ ॥ [ स ]

मुक्तकं यथा। "गुरुर्वचसि पृथुरुरसीत्यादि"। वृत्तगन्धि यथा मम "समरकण्डूयननिविड़भुजदण्डकुण्डलीकृतकोदण्डशिञ्जिनीटङ्कारोज्जागरितवैरिनागर!" (छ)। अत्र कुण्डलीकृतकोदण्डेत्यनुष्टुव्वृत्तस्य पादः। समरकण्डूयनेति च प्रथमाक्षरद्वयरहितस्तस्यैव पादः। उत्कलिकाप्रायं यथा ममैव। "अणिसं विसूमरं णिसिददरसरबिसरबिदलितसमरपरिगदपवरपरबल!" (३७) इत्यादि (च)। चूर्णकं यथा मम। "गुणरत्नसागर! जगदेकनागर! कामिनीमदन! जनरञ्जन!" इत्यादि।

**कथायां सरसं वस्तु गद्यैरेव विनिर्मितम्।**
**क्वचिदत्र भवेदार्य्या क्वचिद् वक्त्रापवक्त्रके ॥**

---

(३७) अणिसं इति। अनिशं विस्मरनिशिततरशरविसरविदलितसमरपरिगतप्रवलपरबलेत्यादि सं०।

---

प्रायमित्यर्थः दीर्घसमासेन आढ्यं युतं तुर्य्यं चतुर्थं चूर्णकमित्यर्थः अल्पसमासकम् अल्पेन समासेन युक्तमित्यर्थः।

(छ) समरेति। समरस्य कण्डूयनाय निविड़ाभ्यां दृढ़ाभ्यां भुजदण्डाभ्यां कुण्डलीकृतं मण्डलीकृतं यत् कोदण्डं धनुः तस्य शिञ्जिन्याः मौर्व्याः टङ्कारः तेन उज्जागरितं वैरिणः अवनीनगरं येन तत्सम्बुद्धौ।

(च) अनिशेति। अनिशम् अनवरतं विस्मराः प्रसरन्तः ये निशिततराः शाणिततराः तीक्ष्णा इत्यर्थः शराः तेषां विसरेण विक्षेपेण विदलितं समरपरिगतं संग्रामस्थितं प्रवलं परबलं शत्रुसैन्यं येन तत्सम्बुद्धौ।

(क) गद्यभेदरूपां कथामाह कथायामिति। कथायां सरसं वस्तु इतिवृत्तं

आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्त्तनम् ॥
५६७ ॥ [ क ]

यथा कादम्बर्य्यादि ।

आख्यायिका कथावत्स्यात् कवेर्वंशादिकीर्त्तनम् ।
अस्यामन्यकवीनां च वृत्तं गद्यं क्वचित् क्वचित् ॥
कथांशानां व्यवच्छेद आश्वास इति बध्यते ।
आर्य्या वक्त्रापवक्त्राणां छन्दसा येन केनचित् ॥
अन्यापदेशेनाश्वासमुखे भाव्यर्थसूचनम् ॥
५६८ ॥ [ ख ]

यथा हर्षचरितादि ।

"अपि त्वनियमो दृष्टस्तत्राप्यन्यैरुदीरणात्" ।

इति दण्ड्याचार्य्यवचनात् केचित् "आख्यायिका नायके-

---

गद्यैरेव विनिर्मितं भवेत् । अत्र कथायां क्वचित् आर्य्या भवेत् । क्वचिद्वा वक्त्रमपरवक्त्रञ्च छन्दसी प्रयोज्ये इति शेषः । आदौ कथारम्भात् प्राक् पद्यैः श्लोकैः नमस्कारः तथा खलादेः दुर्जनादेर्वृत्तस्य चरित्रस्य कीर्त्तनं कथनं भवेदिति शेषः ।

( ख ) पद्यस्यापरभेदरूपामाख्यायिकामाह आख्यायिकेति । आख्यायिका कथावत् स्यात् । कथायां यथा सरसं वस्तु प्रयोज्यं पद्यैर्नमस्कारः खलचरित्रवर्णनञ्च तथाख्यायिकायामपीति भावः । विशेषस्तु तावान् यत् कवेः वंशादीनां कीर्त्तनम् अन्यकवीनाञ्च वृत्तं क्वचित् क्वचिद्वा पद्यं प्रयोज्यमिति । कथांशानां व्यवच्छेदः विभेदः आश्वास इति नाम्ना बध्यते । आश्वासस्य मुखे प्रारम्भे आर्य्यावक्त्रापवक्त्राणां छन्दसां मध्ये येन केनचित् छन्दसा अन्यापदेशेन अपरच्छलेन भाविनः भविष्यतः अर्थस्य वस्तुनः सूचनं प्रकटनं भवेदिति शेषः ।

( ग ) अपीति । तत्रापि आख्यायिकायामपि अन्यैः नायकव्यतिरिक्तैरपि

नैव निबद्धव्या” इत्याहुस्तदयुक्तम् (ग)। आख्यानादयश्च कथाख्यायिकयोरेवान्तर्भावान्न पृथगुक्ताः। यदुक्तं दण्डिनैव।

“अत्रैवान्तर्भविष्यन्ति (घ) शेषाश्चाख्यानजातयः”। इति।

एषामुदाहरणं पञ्चतन्त्रादि। अथ गद्यपद्यमयानि।

**गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते ॥ ५६९ ॥**

यथा देशराजचरितम्।

**गद्यपद्यमयी राजस्तुतिर्विरुदमुच्यते ॥ ५७० ॥**

यथा विरुदमणिमाला।

**करम्भकन्तु भाषाभिर्विविधाभिर्विनिर्मितम् ॥ ५७१ ॥**

यथा मम षोड़शभाषामयी प्रशस्तिरत्नावली। एवमन्येऽपि भेदा उद्देशमन्त्रप्रसिद्धत्वादुक्तभेदानतिक्रमाच्च (ङ) न पृथग्लक्षिताः।

इति साहित्यदर्पणे दृश्यश्रव्यकाव्यनिरूपणो नाम षष्ठः परिच्छेदः।

---

उदीरणात् उच्चारणात् अनियमः अनिश्चयस्तु दृष्ट इति दण्ड्याचार्य्यस्य वचनात् नायकेनैव आख्यायिका निबद्धव्येति केषाञ्चिन्मतमयुक्तमिति फलितार्थः।

(घ) अत्रेति। अत्रैव। कथायामाख्यायिकायां वेत्यर्थः।

(ङ) उद्देशमात्रेति उद्देशमात्रेण नाममात्रेण प्रसिद्धाः। विख्याताः तद्भावात् उक्तभेदानतिक्रमात् उक्तभेदेषु अन्तर्भावादिति भावः।

इति बि, ए, उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता विमलाख्या साहित्यदर्पणस्य षष्ठपरिच्छेदव्याख्या समाप्ता।

# सप्तमः परिच्छेदः ।

इह प्रथमतः काव्ये दोषगुणरीत्यलङ्काराणामवस्थिति-क्रमो दर्शितः। सम्प्रति के ते इत्यपेक्षायामुद्देशक्रमप्राप्तानां दोषाणां स्वरूपमाह।

रसापकर्षका दोषाः ॥ ५७२ ॥

अस्यार्थः प्रागेव स्फुटीकृतः। तद्विशेषमाह।

ते पुनः पञ्चधा मताः ।
पदे पदांशे वाक्येऽर्थे सम्भवन्ति रसेऽपि यत् ॥
५७३ ॥

तत्र ।

दुःश्रवत्रिविधाश्लीलानुचितार्थाप्रयुक्तताः ।
ग्राम्योऽप्रतीतसन्दिग्धनेयार्थनिहतार्थताः ॥
अवाचकत्वं क्लिष्टत्वं विरुद्धमतिकारिता ।
अविमृष्टविधेयांशभावश्च पदवाक्ययोः ॥
दोषाः केचिद्भवन्त्येषु पदांशेऽपि पदेऽपरम् ।
निरर्थकासमर्थत्वे च्युतसंस्कारता तथा ॥ ५७४ ॥

परुषवर्णतया श्रुतिदुःखावहत्वं दुःश्रवत्वम्। यथा।
"कार्त्तार्थ्यं यातु तन्वङ्गी कदानङ्गवशंवदा"।
अश्लीलत्वं (क) व्रीडाजुगुप्साऽमङ्गलव्यञ्जकत्वात्त्रिधा।
क्रमेण उदाहरणम्।

"दृप्तारिविजये राजन्! साधनं सुमहत्तव।
प्रससार शनैर्वायुर्विनाशे तन्वि! ते तदा" ॥ (ख)

अत्र साधनवायुविनाशशब्दाः अश्लीलाः।

"शूरा अमरतां यान्ति पशुभूता रणाध्वरे" ॥ (ग)

अत्र पशुपदं कातर्य्यमभिव्यनक्तीत्यनुचितार्थत्वम्। अप्रयुक्तत्वं तथा प्रसिद्धावपि कविभिरनादृतत्वम्। यथा। "भाति पद्मः सरोवरे"। अत्र पद्मशब्दः पुंलिङ्गः (घ)। ग्राम्यत्वं यथा। "कटिस्ते हरते मनः"। अत्र कटिशब्दो ग्राम्यः (ङ)। अप-

---

(क) श्रुतिदुःखावहत्वं श्रुतिमात्रतः क्लेशजनकत्वम्। कार्तार्थ्यं कृतार्थस्य भावः कार्तार्थ्यम्। अत्र रेफयोगात् कथायाः पारुष्यात् श्रोतुर्दुःखजनकत्वम्। तेनात्र शृङ्गारस्य प्रकर्षहानिरिति रसापकर्षः। अश्लीलत्वं व्रीडादिवशात् अवक्तव्यमर्थान्तरमश्लीलं तस्य भावः।

(ख) दृप्तेति। हे राजन्! दृप्तानाम् अरीणां शत्रूणां विजये तव सुमहत् साधनं सैन्याद्युपायः। हे तन्वि! ते तव विनाशे अदर्शने विरहे इत्यर्थः वायुः मलयसमीरण इत्यर्थः शनैः मन्दं मन्दं विससार सञ्चचार। अत्र सैन्याद्युपायार्थे प्रयुक्तः साधनशब्दः उपस्थव्यञ्जकतया व्रीडाव्यञ्जकः। समीरणे प्रयुक्तो वायुशब्दः पायुवायुव्यञ्जकतया जुगुप्साव्यञ्जकः। अदर्शने प्रयुक्तो विनाशशब्दः मृत्युव्यञ्जकतया अमङ्गलव्यञ्जकतया इति बोद्धव्यम्। अत्र राजविषयकरतिभावस्य रसशब्दप्रतिपाद्यस्य तथा शृङ्गारस्य तत्तच्छब्दानां तादृशार्थव्यञ्जकतया प्रकर्षविच्छेद इति द्रष्टव्यम्।

(ग) शूरा इति। शूराः वीराः रणाध्वरे संग्रामयज्ञे पशुभूताः निहता इति भावः अमरतां देवत्वं यान्ति प्राप्नुवन्ति अत्र वीराणां श्लाघ्यानां पशुत्वकथनमयुक्तमिति अनुचितार्थत्वं तेन चात्र वीररसस्य प्रकर्षहानिरिति बोध्यम्।

(घ) तथा तेन प्रकारेण प्रसिद्धौ अपि कोषादिषु प्रसिद्धिसत्त्वेऽपि। पुंलिङ्गः कविभिरप्रयुक्त इति शेषः।

(ङ) ग्राम्यत्वं हालिकादिसाधारणजनप्रयोज्यत्वम्। कटिरिति। अत्र शृङ्गारस्य अगूढत्वप्रकटनेन वैचित्र्यापगमात् प्रकर्षहानिरित्यवधेयम्।

तीतत्वमेकदेशमात्रप्रसिद्धत्वम्। यथा। "योगेन दलिताशयः"। अत्र योगशास्त्र एव वासनार्थे आशयशब्दः (च)।

"आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां गुरु"। (छ)

अत्र वन्द्यामिति किं वन्दीभूतायामुत वन्दनीयायामिति सन्देहः। नेयार्थत्वं रूढ़िप्रयोजनाभावादशक्तिकृतं लक्ष्यार्थप्रकाशनम् (ज)। यथा।

"कमले चरणाघातं मुखं सुमुखि! तेऽकरोत्"। (झ)

अत्र चरणाघातेन निर्जितत्वं लक्ष्यम्। निहतार्थत्वमुभयार्थस्य शब्दस्याप्रसिद्धेऽर्थे प्रयोगः। यथा। "यमुनाशम्बरमम्बरं व्यतानीत्"। शम्बरशब्दो दैत्ये प्रसिद्ध इह तु जले

---

(च) अप्रतीतत्वम्। एकदेशमात्रे न तु सर्वत्र प्रसिद्धत्वं ख्यातत्वम्। योगेन जीवब्रह्मणोरैक्यचिन्तनं योगः तेन दलितः खण्डितः आशयः वासना यस्य तथोक्तः। अत्र वासनार्थत्वम् आशयशब्दस्य अजानतां योगशास्त्रानभिज्ञानाम् अर्थबोधव्याघात इति बोध्यम्।

(छ) आशीरिति। आशीःपरम्पराम् आशीर्वादसूचकवाक्यावलीं कर्णे कृत्वा शुत्वेत्यर्थः। अत्र प्रकरणादिनियमाभावात्। वन्द्यामिति पदं श्लेषवशात् अर्थसन्देहजननात् सन्दिग्धम्। अत्र सन्देहवशात् शाब्दबोधविलम्बेन राजविषयरतिभावरूपस्य रसत्वसंयोगात् रसपदप्रतिपाद्यस्य प्रकर्षहानिः।

(ज) नेयार्थत्वमिति। लक्षणाया रूढ़िप्रयोजनान्यतरहेतुकत्वनियमात् तदभावे अशक्तिकृतम् असामर्थ्यप्रयुक्तम् अव्युत्पत्तिविजृम्भितमित्यर्थः कवेरिति शेषः।

(झ) कमले इति। निर्जितत्वं पराभव इत्यर्थः कमलस्य चरणाघातेन मुख्यार्थबाधः मुख्यलक्ष्ययोः सामान्यविशेषभावः सम्बन्धः। अत्र रूढ़िप्रयोजनयोरन्यतरं विना प्रथमं कवेरशक्तिनिश्चयः तदनन्तरं कथञ्चित् लक्ष्यार्थाविष्करणं ततः शाब्दबोध इति विलम्बेन रसप्रतीतेः प्रतिबन्धकत्वमिति बोध्यम्।

(ञ) निहतार्थत्वम् उभयार्थस्य उभयार्थप्रतिपादकस्य। यमुनेति। यमुनाम्बरं कालिन्दीसलिलम् अम्बरम् आकाशं व्यतानीत् रुद्धं स्फीततया व्याप्तवत्।

निहतार्थः (ञ)। "गीतेषु कर्णमादत्ते"। आङ्पूर्वो दाञ्-धातुर्दानार्थेऽवाचकः। यथा वा।

"दिनं मे त्वयि सम्प्राप्ते ध्वान्तच्छन्नापि यामिनी"। (ट)

अत्र दिनमिति प्रकाशमयार्थेऽवाचकम्। क्लिष्टत्वमर्थ-प्रतीतेर्व्यवहितत्वम्। "क्षीरोदजावसतिजन्मभुवः प्रसन्नाः"। अत्र क्षीरोदजा लक्ष्मीस्तस्या वसतिः पद्मं तस्य जन्मभुवो जलानि। "भूतयेऽस्तु भवानीशः"। अत्र भवानीशशब्दो भवान्याः पत्यन्तरप्रतीतिकारित्वाद्विरुद्धमवगमयति (ठ)।

"स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः"।

अत्र वृथात्वं विधेयं, तच्च समासे गुणीभावादनुवाद्यत्व-प्रतीतिकृत्। यथा वा। "रक्षांस्यपि पुरःस्थातुमलं रामानु-

---

अत्र शम्बरशब्दः श्रुतिमात्रतः प्रसिद्धार्थं प्रति प्रधावितस्ततस्तदसङ्गतेस्तस्मात् निवृत्तः जलं प्रत्याययन् शाब्दबोधविलम्बात् यमुनाविषयरतिभावस्य प्रकर्षहानिरिति बोध्यम्।

(ट) अवाचकत्वं यथा गीतेष्विति। यदि च दाधातोरभिधयैव दानवाचकत्वं स्थितं तदपि आङ्पूर्वकत्वे तद्विपरीतार्थस्य ग्रहणरूपस्य अभिधयैव प्रतिपादनादिति भावः। दिनमिति। त्वयि सम्प्राप्ते उपस्थिते मे मम ध्वान्तच्छन्नापि तिमिरावृतापि यामिनी दिनम्। अत्र दिनशब्दः सूर्य्यकिरणावच्छिन्नप्रहरचतुष्टयार्थकः। इति प्रकाशमयार्थप्रतीतौ विलम्बात् शाब्दबोधः तस्मात् रसप्रतीतेः प्रतिबन्धकत्वम्। अत्र दिनशब्देन लक्षणया प्रकाशमयार्थः, सा च रूढ़िहेतुकेति नात्र नेयार्थत्वावसर इति बोध्यम्।

(ट) क्लिष्टत्वमिति। अर्थप्रतीतेः अर्थावबोधस्य व्यवहितत्वं व्यवधानेन उपस्थाप्यत्वम्। अत्र क्रमेण पदार्थोपस्थितेः शाब्दबोधविलम्बात् रसादिप्रतीतेः प्रतिबन्धकमित्यपकर्षः।

(ड) विरुद्धमतिकारिता विपरीतबुद्धित्वं यथा भूतये इति भवस्य पत्नी भवानी तस्याः ईशः पतिः। अत्र भवान्याः पत्यन्तरप्रतीतिकारित्वात् देवविषयकरतेरपकर्षः। अविमृष्टेति। अविमृष्टः प्राधान्येन अनिर्दिष्टः विधेयांशः

जस्य मे”। रामस्येति वाच्यम्। यथा वा। “आसमुद्रक्षितीशानाम्”। अत्र आसमुद्रमिति वाच्यम्। यथा वा।

“यत्र ते पतति सुभ्रु! कटाक्षः षष्ठबाण इव पञ्चशरस्य”।

अत्र षष्ठ इवेत्युत्प्रेक्ष्यम्। यथा वा।

“अमुक्ता भवता नाथ! मुहूर्त्तमपि सा पुरा”। (ड)

अत्र अमुक्तेत्यत्र नञः प्रसज्यप्रतिषेधत्वमिति विधेयत्वमेवोचितम्। यदाहुः।

“अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ्”॥ (ढ)

यथा।

“नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः”। (ण)

---

इत्र तस्य भावः पदार्थानां मध्ये विधेयस्यैव उपादेयत्वेन प्राधान्यं तस्य प्राधान्येन निर्देश एव उचितः तदवैपरीत्यम् अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेदिति नियमस्य अन्यथात्वमित्यर्थः, स च क्वचित् समासे गुणीभावेन क्वचित् उद्देश्यात् प्राक् विधेयस्य उपादानेन भवति। अनुवाद्यत्वप्रतीतिकृत् उद्देश्यत्वबोधजनकम्। तेनात्र शाब्दबोधे कष्टता तया च वीररसप्रतीतेरपकर्षः। रक्षांसीति अलं समर्थानि, अलं भूषणपर्याप्तिशक्तिवारणवाचकमित्यमरः। अत्र रावणवधे रामस्यैव प्राधान्येन उपादेयत्वात् तस्य पृथक् निर्देश एवोचितस्तदकरणात् तादृगुपादेयताप्रतीतेः प्रतिरोधस्तेन च वीररसस्यापकर्षः। आसमुद्रेति अत्र रघुवंशीयानामधिकारस्य समुद्रपर्य्यन्ततायाः एव उपादेयतया प्राधान्यं तच्च समासे गुणीभावात् न तथाप्रतीतिकृदिति रसस्यापकर्षः। यत्रेति अत्र षष्ठत्वस्यैव उपादेयतया प्राधान्यं तदकरणात् रसस्य किञ्चिदपकर्षः। अमुक्तेति। अत्र प्रसज्यप्रतिषेधे नञोविधेयतैवोचिता, समासे गुणीभावेन तद्विपर्य्ययात् अर्थबोधस्य कष्टतया रसापकर्ष इति बोध्यम्।

(ढ) अप्राधान्यमिति। यत्र वाक्ये विधेः विध्यर्थस्य अप्राधान्यम् उद्देश्यतया अनुद्यत्वं प्रतिषेधे नञर्थे प्रधानता मुख्यत्वं यत्र च क्रियया सह नञ् तिष्ठतीत्यर्थः असौ प्रसज्यप्रतिषेधः।

(ण) नवजलधर इति। उर्वशीवियोगेन विक्लवं पुरूरवसो वितर्कवर्णन-

उक्तोदाहरणे तत्पुरुषसमासे गुणीभावे नञः पर्य्युदासतया निषेधस्य विधेयतानवगमः (त)। यदाहुः।

"प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता।
पर्य्युदासः स विज्ञेयो यत्रोत्तरपदे न नञ्" ॥ (थ)

तेन।

"जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः।
अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत्" ॥ (द)

अत्र अत्रस्ततामनूद्यात्मगोपनाद्येव विधेयमिति नञः पर्य्युदासतया गुणभावो युक्तः। ननु अश्राद्धभोजी ब्राह्मणः, असूर्य्यम्पश्या राजदारा इत्यादिवत् अमुक्तेत्यत्रापि प्रसज्यप्रतिषेधो भविष्यतीति चेन्न। अत्रापि यदि भोजनादिरूपक्रियांशेन नञः सम्बन्धः स्यात्तदेव तत्र प्रसज्यप्रतिषेधत्वं वक्तुं शक्यम्। न च तथा। विशेष्यतया प्रधानेन तद्बोध्यार्थेन कर्त्रंशेनैव नञः सम्बन्धात्। यदाहुः।

---

मिदम्। अत्र सन्नद्धनवजलधरस्य इतनिशाचरत्वविधानमप्रधानं नञर्थस्य तदभावरूपस्य प्राधान्यं क्रियाया भवतीत्याद्यध्याहृतया नञः सम्बन्धः तदत्र प्रसज्यप्रतिषेधत्वम्।

(त) उक्तोदाहरणे अमुक्तेत्यत्र विधेयतानवगमः विधेयस्य अप्रतीतिः।

(थ) प्रधानत्वमिति। यत्र वाक्ये विधेः विध्यर्थस्य प्रधानत्वं मुख्यत्वं प्रतिषेधे नञर्थे अप्रधानता गुणभावः यत् च उत्तरपदे परवर्त्तिपदेन सह नञ् तिष्ठतीत्यर्थः असौ पर्य्युदासः।

(द) जुगोपेति। स दिलीपः अत्रस्तः अभीतः सन् आत्मानं जुगोप ररक्ष, अनातुरः अपीड़ितः सन् धर्मं भेजे सिषेवे, अगृध्नुः अलुब्धः सन् अर्थान् करान् आददे, असक्तः अनासक्तः सन् सुखम् अन्वभूत् बुभोज। अत्र विध्यर्थस्य आत्मगोपनस्य प्राधान्यं प्रतिषेधे अत्रस्त इत्यादिषु स्थिते नञर्थे अप्रधानता, उत्तरपदेन त्रस्तादिना नञः सम्बन्धः।

"श्राद्धभोजनशीलो हि यतः कर्त्ता प्रतीयते।
न तद्भोजनमात्रं तु कर्त्तरीनेर्विधानत इति" ॥ (ध)

अभुक्तेत्यत्र तु क्रिययैव सह सम्बन्ध इति दोष एव। एते च क्लिष्टत्वादयः समासगता एव पददोषाः। वाक्ये दुःश्रवत्वं यथा।

"स्मरार्त्त्यन्धः कदा लप्स्ये कार्त्तार्थ्यं विरहे तव। (न)
कृतप्रवृत्तिरन्यार्थे कविर्वान्तं समश्नुते" ॥ (प)

अत्र जुगुप्साव्यञ्जकाश्लीलता।

"उद्यत्कमललौहित्यैर्वक्राभिर्भूषिता तनुः"। (फ)

अत्र कमललौहित्यं पद्मरागः। वक्राभिः वामाभिः।

"धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः।

---

(ध) श्राद्धेति। यतः यस्मात् श्राद्धभोजनशीलः कर्त्ता प्रतीयते, कर्त्तरि इनेरिनप्रत्ययस्य विधानतः विधानात् न तु तस्य कर्त्तुः भोजनमात्रं प्रतीयते इत्यनेनान्वयः।

(न) स्मरेति। तव विरहे स्मरस्य कामस्य आर्त्तिः पीड़ा तया अन्धः मोहित इत्यर्थः अहं कदा कार्त्तार्थ्यं कृतार्थतां लप्स्ये प्राप्स्यामि। अत्र अनेकपदस्य परुषवर्णघटितत्वेन वाक्यगतं दुःश्रवत्वम्।

(प) कृतेति। अन्यस्य कवेः अर्थे वर्णिते वस्तुनीत्यर्थः कृता प्रवृत्तिर्येन तादृशः परकवितामनुसृत्य रचयन्नित्यर्थः कविः वान्तम् उद्गीर्णम् अश्नुते भक्षयति। अत्र वान्तं समश्नुते इति वाक्यं जुगुप्साव्यञ्जकत्वात् अश्लीलम्।

(फ) उद्यदिति। उद्यद्भिः विकस्वरैः कमललौहित्यैः पद्मरागैः वक्राभिः वामाभिः नारीभिः तनुः भूषिता अलङ्कृता। अत्र कमललौहित्यवक्राशब्दौ लक्षणया पद्मरागवामारूपार्थबोधकौ सा च लक्षणा रूढिप्रयोजनाभावात् अशक्तिकृतेति पदद्वयगतत्वेन वाक्यगतं नेयार्थत्वम्।

(ब) धम्मिल्लस्येति। कुरङ्गशावाक्ष्याः अपूर्वा बन्धव्युत्पत्तिः विन्यासविशेषः यस्य तादृशस्य धम्मिल्लस्य संयतकेशपाशस्य, धम्मिल्लाः संयताः कचा इत्यमरः।

रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम्" ॥ (ब)

अत्र धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति सम्बन्धः क्लिष्टः। "न्यक्कारो ह्ययमेव मे यदिति" अत्र च अयमेव न्यक्कार इति न्यक्कारस्य विधेयत्वं विवक्षितम् (भ)। तच्च शब्दरचनावैपरीत्येन गुणीभूतम्। रचना च पदद्वयस्य विपरीतेति वाक्यदोषः।

"आनन्दयति ते नेत्रे योऽसौ सुभ्रु ! समागतः"।

इत्यादिषु "यत्तदोर्नित्यः सम्बन्धः" इति न्यायादुपक्रान्तस्य यच्छब्दस्य निराकाङ्क्षत्वप्रतिपत्तये तच्छब्दसमानार्थतया प्रतिपाद्यमाना इदमेतददःशब्दा विधेया एव भवितुं युक्ताः। अत्र तु यच्छब्दनिकटस्थतया अनुवाद्यत्वप्रतीतिकृत्तच्छब्दस्यापि यच्छब्दनिकटस्थितस्य प्रसिद्धपरामर्षित्वमात्रम् (म)। यथा।

"यः स ते नयनानन्दकरः सुभ्रु ! स आगतः"।

यच्छब्दव्यवधानेन स्थितास्तु निराकाङ्क्षत्वमवगमयन्ति।

---

शोभां प्रेक्ष्य दृष्ट्वा कस्य जनस्य मानसं निकामम् अतिमात्रं यथा तथा न रज्यति। अत्र पदार्थानाम् अन्वयबोधनस्य कष्टसाध्यत्वात् रसास्वादस्य प्रतिबन्धकत्वेन क्लिष्टत्वम्।

(भ) न्यक्कार इति। अत्र वाक्यगतः विधेयाविमर्षः सहृदयमनःसु तादृक्वीररसास्वादस्य मनाक् प्रतिघातं जनयतीति बोद्धव्यम्।

(म) आनन्दयतीति। यत्तदोः शब्दयोः सम्बन्धः संयोगः नित्यः अविच्छिन्न इत्यर्थः। यत्र यच्छब्दः तत्र तच्छब्दो नियत इति यावत्। उपक्रान्तस्य अनुवाद्यत्वेन उपात्तस्य निराकाङ्क्षत्वप्रतिपत्तये आकाङ्क्षाराहित्यबोधाय। प्रतिपाद्यमानाः प्रयुज्यमानाः। अनुवाद्यत्वप्रतीतिकृत् उद्देश्यत्वबोधकम्। अत्र विधेयस्य अदःशब्दस्य नैकट्यात् अप्राधान्येन निर्देश इति विधेयाविमर्ष इति भावः।

यथा ।

"आनन्दयति ते नेत्रे योऽधुनासौ समागतः" ।

एवमिदमादिशब्दोपादानेऽपि । यत्र च यत्तदोरेकस्यार्थत्वं सम्भवति तत्रैकस्य उपादानेऽपि निराकाङ्क्षत्वप्रतीतिरिति न क्षतिः । तथा हि, यच्छब्दस्योत्तरवाक्यगतत्वेनोपादाने सामर्थ्यात् पूर्ववाक्ये तच्छब्दस्यार्थत्वम् । यथा "आत्मा जानाति यत् पापम्" (य) । एवम् ।

"यं सर्वशैलाः परिकल्प्य वत्सं
मेरौ स्थिते दोग्धरि दोहदक्षे ।
भास्वन्ति रत्नानि महौषधीश्च"

इत्यादावपि तच्छब्दस्य प्रकान्तप्रसिद्धानुभूतार्थत्वे यच्छब्दस्यार्थत्वम् (र) । क्रमेण यथा ।

"स हत्वा वालिनं वीरस्तत्पदे चिरकाङ्क्षिते ।
धातोः स्थान इवादेशं सुग्रीवं संन्यवेशयत्" ॥ (ल)

"स वः शशिकलामौलिस्तादात्म्यायोपकल्पताम्" । (व)

---

(य) यत्र चेति । आर्थत्वम् अर्थवशलभ्यत्वम् । सामर्थ्यात् योग्यताबलात् । आत्मेति । यत् पापं तत् आत्मा जानातीति सामर्थ्यात् अन्तःकरणीयमिति भावः ।

(र) यमिति । अत्र स हिमालयः अस्तीति पूर्ववाक्ये आर्थेन तच्छब्देनान्वयः ।

(ल) स इति । स वीरः रामः वालिनं हत्वा धातोः स्थाने आदेशमिव चिरकाङ्क्षिते तत्पदे तस्य वालिनः पदे राज्ये सुग्रीवं संन्यवेशयत् अभिषिक्तवान् । अत्र स इति यः सुग्रीवमित्रमिति आर्थेन यच्छब्देन सम्बध्यते । अत्र तच्छब्दस्य प्रक्रान्तत्वम् ।

(व) स इति । सः प्रसिद्धः शशिकला मौलौ यस्य तथोक्तः शिव इत्यर्थः सः युष्माकं तादात्म्याय तन्मये इत्यर्थः उपकल्पतां मुक्तिप्रदो भवतु इत्यर्थः

"तामिन्दुसुन्दरमुखीं हृदि चिन्तयामि" ॥ (श)

यत्र च यच्छब्दनिकटस्थितानामपीदमादिशब्दानां भिन्नलिङ्गविभक्तित्वं तत्रापि निराकाङ्क्षत्वमेव क्रमेण यथा।

"विभाति मृगशावाक्षी येदं भुवनभूषणम्। (ष)

इन्दुर्विभाति यस्तेन दग्धाः पथिकयोषितः" ॥ (स)

क्वचिदनुपात्तयोर्द्वयोरपि सामर्थ्यादवगमो यथा ॥ (ह)

"न मे शमयिता कोऽपि भारस्येत्युर्वि! मा शुच।

नन्दस्य भवने कोऽपि बालोऽस्त्यद्भुतपौरुषः" ॥ (च)

अत्र योऽस्ति स ते भारस्य शमयितेति बुध्यते।

"यद्विरहदुःखं मे तत् को वापहरिष्यति"।

इत्यत्रैको यच्छब्दः साकाङ्क्ष इति न वाच्यम्। तथाहि, यद्यदित्यनेन येन केनचिद्रूपेण स्थितं सर्वात्मकं वस्तु विवक्षितम्। तथाभूतस्य तस्य तच्छब्देन परामर्शः (क)। एव-

---

अत्र यः युष्माभिराराध्यते इति आर्थेन यच्छब्देन स इति सम्बध्यते। अत्र प्रसिद्धार्थकस्तच्छब्दः।

(श) तामिति। अत्र या मया कीर्त्तितेति आर्थेन यच्छब्देन तामिति सम्बध्यते। अत्र अनुभूतार्थकस्तच्छब्दः।

(ष) विभातीति। या या मृगशावाक्षी विभाति इदं भुवनानां भूषणम् अलङ्कारः। अत्र निकटस्थितोऽपि इदम्शब्दः क्लीवलिङ्गः।

(स) इन्दुरिति। य इन्दुर्विभाति तेन इन्दुना पथिकानां योषितः कान्ताः दग्धाः। अत्र निकटस्थितोऽपि तच्छब्दः भिन्नविभक्तिकः।

(ह) अनुपात्तयोः अप्रयुक्तयोः द्वयोः यत्तच्छब्दयोरित्यर्थः सामर्थ्यात् योग्यतावलात् अवगमः प्रतीतिः।

(च) नेति। हे उर्वि! पृथिवि! कोऽपि जनः मे मम भारस्य शमयिता न अस्तीति शेषः इति मा शुच शोकं मा कुरु, नन्दस्य भवने कोऽपि अद्भुतपौरुषः अलौकिकपराक्रमः बालः शिशुः अस्ति।

(क) यदिति। अत्र यच्छब्दद्वयम् एकः एकेन तच्छब्देन निराकाङ्क्षः अपरः साकाङ्क्ष इति न वक्तव्यम्।

मन्येषामपि वाक्यगतत्वेनोदाहरणं बोध्यम्। पदांशे श्रुतिकटुर्यथा। "तद्गच्छ सिद्ध्यै कुरु देवकार्य्यम्" (ख)।

"धातुमत्तां गिरिर्धत्ते"। अत्र मत्ताशब्दः क्षीवार्थे निहितः (ग)।

"वर्ण्यते किं महासेनो विजेयो यस्य तारकः"।

अत्र विजेय इति कृत्यप्रत्ययः क्तप्रत्ययार्थेऽवाचकः (घ)।

"पाणिः पल्लवपेलवः"। पेलवशब्दस्याद्याक्षरे अश्लीले (ङ)।

"संग्रामे निहताः शूरा वचोबाणत्वमागताः"।

अत्र वचःशब्दस्य गीःशब्दवाचकत्वे नेयार्थत्वम्। तथा तत्रैव बाणस्थाने शरेति पाठे अत्र पदद्वयमपि न परिवृत्तिसहम्। जलध्यादौ तु उत्तरपदं वाड़वानलादौ पूर्वपदम्। एवमन्येऽपि यथासम्भवं पदांशदोषा ज्ञेयाः। निरर्थकत्वादीनां त्रयाणाञ्च पदमात्रगतत्वेनैव लक्ष्ये सम्भवः (च)। यथा।

---

(ख) तद्गच्छेति। अत्र सिद्ध्यै इति पदस्य अंशभूतौ ध्यै इति शब्दः श्रवणकार्कश्यमवगमयतीति भावः।

(ग) धातुमत्तामिति। अत्र मत्ताशब्दः क्षीबार्थे प्रसिद्धः, अत्र तु विद्यमानत्वरूपार्थे प्रयुक्त इति अत्र धातुमत्तामिति पदस्य अंशभूतो मत्ताशब्दः निहतार्थः।

(घ) वर्ण्यते इति। यस्य तारको विजेयः स महासेनः कार्त्तिकेयः किं वर्ण्यते। अत्र विजेय इति पदस्य पदांशभूतः कृत्यप्रत्ययः विजित इत्यर्थस्य अवाचक इति भावः।

(ङ) पाणिरिति। आद्याक्षरे पेल इति। द्वे अक्षरे इत्यर्थः अश्लीले व्रीडाव्यञ्जकत्वादिति भावः।

(च) संग्रामे इति। शूराः वीराः संग्रामे युद्धे निहताः सन्तः वचोबाणत्वं वचांसि बाणाः शरा येषां ते वचोबाणाः वचोभिरेव शरकार्यं शत्रुवधादिकं कुर्वन्तीति भावः तत् देवत्वमित्यर्थः आगताः प्राप्ताः। अत्र वचोबाणत्वमिति पदस्य अंशभूतवचःशब्दो गीःशब्दवाचकत्वे अप्रसिद्धतया नेयार्थ इति भावः।

"मुञ्च मानं हि मानिनि!"। अत्र हिशब्दो वृत्तिपूरणमात्रप्रयोजनः। "कुञ्जं हन्ति कृशोदरी"। तत्र हन्तीति गमनार्थे पठितमपि न तत्र समर्थम् (छ)। "गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वचः" (ज)। "आङो यमहनः" [पा० १।३।२८।] "स्वाङ्गकर्मकाच्चेति" [पा० १।३।२८। सू० वा०] अनुशासनबलादाङ्पूर्वस्य हनः स्वाङ्गकर्मकस्यैवात्मनेपदं नियमितम्। इह तु तल्लङ्घितमिति व्याकरणलक्षणहीनत्वात् च्युतसंस्कारत्वम्। ननु अत्र "आजघ्ने" इति पदस्य स्वतो न दुष्टता अपि तु पदान्तरापेक्षयैवेत्यस्य वाक्यदोषता। मैवम्। तथाहि, गुणदोषालङ्काराणां शब्दार्थगतत्वेन व्यवस्थितेस्तदन्वयव्यतिरेकानुविधायित्वं हेतुः। इह तु दोषस्य "आजघ्ने" इति पदमात्रस्यैवान्वयव्यतिरेकानुविधायित्वम्। पदान्तराणां परिवर्त्तनेऽपि तस्य तादवस्थ्यादेवेति पददोष एव तथा। यथेहात्मनेपदस्य परिवृत्तावपि न पददोषः तथा हन्प्रकृतेरपीति न पदांश-

---

परिवृत्तिसहं विनिमयार्हम्। तच्छब्दपरित्यागेन शब्दान्तरप्रयोगे न तदर्थबोधकमित्यर्थः। उत्तरपदं धि इत्यंशभूतमित्यर्थः। पूर्वपदं वाडवेत्यंशभूतमित्यर्थः न परिवृत्तिसहमिति शेषः। अत्र धिस्थाने ध इति प्रयोगे तथा वाडवस्थाने अश्वादिपदप्रयोगे नेयार्थत्वमिति भावः। निरर्थकत्वादीनां निरर्थकासमर्थच्युतसंस्कारत्वानामित्यर्थः।

(छ) मुञ्चेति। अत्र हिशब्दो निरर्थक इति भावः। कुञ्जमिति उनर्थं बोधयितुं शक्तमित्यर्थः।

(ज) गाण्डीवीति। गाण्डीवी अर्जुनः भुजाभ्यां बाहुभ्यां कनकशिलानिभं काञ्चनपाषाणसदृशं विषमविलोचनस्य त्रिनेत्रस्य वक्षः आजघ्ने आहतवान्।

(झ) गुणेति। गुणानां वक्ष्यमाणानां माधुर्यादीनां दोषाणां दुःश्रवत्वादीनाम् अलङ्काराणामनुप्रासोपमादीनां शब्दार्थगतत्वेन व्यवस्थितेः एते शब्दगुणा एवे अर्थगुणा एते शब्ददोषा एते अर्थदोषा एते शब्दालङ्कारा एते अर्थालङ्कारा

दोषः । एवं "पद्मः" इत्यत्राप्रयुक्तस्य पदगतत्वं बोध्यम् । एवं प्राकृतादिव्याकरणलक्षणहानावपि च्युतसंस्कारत्वमूह्यम् । इह शब्दानां सर्वथा प्रयोगाभावेऽसमर्थत्वं विरलप्रयोगे निहतार्थत्वम् । निहतार्थत्वमनेकार्थशब्दविषयम् अप्रतीतत्वे त्वेकार्थस्यापि शब्दस्य सार्वत्रिकप्रयोगविरहः । अप्रयुक्तत्वमेकार्थशब्दविषयम् । असमर्थत्वमनेकार्थशब्दविषयम् । असमर्थत्वे हन्त्यादयोऽपि गमनार्थे पठिताः । अवाचकत्वे दिनादयः प्रकाशमयाद्यर्थे न तथेति परस्परभेदः । एवं पददोषसजातीया वाक्ये दोषा उक्ताः सम्प्रति तद्विजातीया उच्यन्ते (ञ) ।

वर्णानां प्रतिकूलत्वं लुप्ताहतविसर्गते ।
अधिकन्यूनकथितपदताहतवृत्तताः ॥
पतत्प्रकर्षता सन्धौ विश्लेषाश्लीलकष्टताः ।
अर्द्धान्तरैकपदता समाप्तपुनरात्तता ॥
अभवन्मतसम्बन्धा क्रमामतपरार्थताः ।
वाच्यस्यानभिधानञ्च भग्नप्रक्रमता तथा ॥

---

इत्येवं व्यवस्थाया इत्यर्थः हेतुः कारणं तदन्वयव्यतिरेकानुविधायित्वं तत्सत्त्वे तत्सत्ता अन्वयः तदसत्त्वे तदसत्ता व्यतिरेकः तौ अनुविदधातीति अन्वयव्यतिरेकानुविधायी तेषां शब्दार्थगतानां गुणदोषालङ्काराणाम् अन्वयव्यतिरेकानुविधायी तदन्वयव्यतिरेकानुविधायी तस्य भावः तत्त्वम् । अयं भावः यत्र तत्तच्छब्दसद्भावे न तु तत्परिवृत्तौ तत्तद्गुणादिसद्भावः तत्र तत्तद्गुणादीनां शब्दगतत्वं यत्र न तथा तत्र तेषामर्थगतत्वमिति । तद्विजातीयाः केवलवाक्यगता इत्यर्थः ।

(ञ) वर्णानामिति । वर्णानां प्रतिकूलत्वं प्रतिकूलवर्णता इत्यर्थः १ । लुप्तविसर्गता २ । आहतविसर्गता ३ । अधिकपदता ४ । न्यूनपदता ५ । कथितपदता ६ । हतवृत्तता ७ । पतत्प्रकर्षता ८ । सन्धिविश्लेषः ९ । सन्ध्यश्लीलता १० । सन्धिकष्टता ११ । अर्द्धान्तरैकपदता १२ । समाप्तपुनरात्तता १३ ।

त्यागः प्रसिद्धेरस्थाने न्यासः पदसमासयोः।
सङ्कीर्णता गर्भितता दोषाः स्युर्वाक्यमात्रगाः॥
५७५॥ [ञ]

वर्णानां रसानुगुण्यविपरीतत्वं प्रतिकूलत्वम् (ट)।

यथा मम।

"ओवट्टइ उल्लट्टइ सअणे कहिं पि मोट्टाअइ णो परिहट्टइ।
हिअएण फिट्टइ लज्जाइ खुट्टइ दिहीए सा" (१)।

अत्र टकाराः शृङ्गाररसपरिपन्थिनः केवलं शक्तिप्रदर्शनाय निबद्धाः। एषाञ्चैकद्वित्रिचतुःप्रयोगेण न तादृग्रसभङ्ग इति न दोषः। "गता निशा इमा बाले!"। अत्र लुप्तविसर्गाः। आहता ओत्वं प्राप्ता विसर्गा यत्र। यथा। "धीरो वरो नरो

(१) ओवट्टइ इति। उद्वर्त्तयति उल्लोटयति शयने कस्मिन्नपि मोट्टायति न परिघट्टति। हृदयेन स्फिटयति लज्जया खुट्टयति धृतेः सा इति सं०। उद्वर्त्तयति देहमुत्तानीकरोति। उल्लोटयति पार्श्वपरिवर्त्तनं करोति। मोट्टायति मोट्टायितभावं प्रकटयति। न परिघट्टति परिघट्टनं न करोति। स्फिटयति भज्यति। खुट्टयति कुण्ठिता भवति इत्यर्थः।

अभवन्मतसम्बन्धः १४। अक्रमता १५। अमतपरार्थता १६। वाच्यानभिधानम् १७। भग्नप्रक्रमता १८। प्रसिद्धित्यागः १९। अस्थाने पदन्यासः २०। अस्थाने समासन्यासः २१। सङ्कीर्णता २२। गर्भितता २३। एते वाक्यमात्रगाः केवलवाक्यगता दोषाः स्युः।

(ट) वर्णानां प्रातिकूल्यमुदाहरति यथेति। शृङ्गाररसपरिपन्थिनः शृङ्गारस्य प्रतिकूलाः। अत्र टकारवर्णानां ओजोव्यञ्जकतया वीरबीभत्सादिषु एव उपयोगित्वात् शृङ्गारप्रकर्षहानिः। अत्र दुःश्रवत्वदोषोऽपीति विभाव्यम्।

(ठ) लुप्तविसर्गतामुदाहरति गता इति। बहुशः प्रयोगे दोषोऽयं श्रोट-

याति" इति। "पल्लवाकृतिरक्तोष्ठी"। अत्राकृतिपदमधिकम्। एवं "सदाशिवं नौमि पिनाकपाणिम्" इति विशेषणमधिकम्। "कुर्य्यां हरस्यापि पिनाकपाणेरिति। अत्र तु विशेषप्रतिपत्त्यर्थमुपात्तत्वाद्युक्तमेव। यथा वा "वाचमुवाच कौत्सः"। अत्र वाचमित्यधिकम् उवाचेत्यनेनैव कृतार्थत्वात्। क्वचित्तु विशेषणदानार्थं तत्प्रयोगो युज्यते। यथा। "उवाच मधुरां वाचम्" इति। केचित्त्वाहुः "यत्र विशेषणस्यापि क्रियाविशेषणत्वं सम्भवति तत्रापि तत्प्रयोगो न घटते"। यथा। "उवाच मधुरं धीमान्" इति।

"यदि मय्यर्पिता दृष्टिः किं ममेन्द्रतया तदा"।

अत्र प्रथमे त्वयेति पदं न्यूनम्।

"रतिलीलाश्रमं भिन्ते सलीलमनिलो वहन्"।

लीलाशब्दः पुनरुक्तः। एवं "जन्नुर्विसं धृतविकासिविसप्रसूना"। अत्र विसशब्दस्य धृतपरिस्फुटतत्प्रसूना इति सर्वनाम्नैव परामर्शो युक्तः। हतं वृत्तं लक्षणानुसरणेऽप्यश्रव्यं रसाननुगुणमप्राप्तगुरुभावान्तलघु च। क्रमेण यथा। "हन्त

---

धैरस्यापादकत्वादिति बोध्यम्। अधिकविसर्गस्थितौ दुःश्रवत्वमेव यथा अरः खलः खलः कान्त इति। आहतविसर्गतामुदाहरति धीर इति। बहुधाप्रयोग एवास्य दोषत्वमिति बोध्यम्। अधिकम् अनुपयोगिपदं यत्र तद्भावः अधिकपदता यथा पल्लवेति। अत्राधिकपदप्रयोगे तात्पर्य्यानुधावनेन सहृदयानां रसास्वादप्रतिबन्ध इति ध्येयम्। विशेषप्रतिपत्त्यर्थं पिनाकपाणेरित्यनेन हरस्य दुर्धर्षत्वरूपविशेषस्य बोधाचेत्यर्थः। न्यूनपदतामुदाहरति यदीति। यदि मयि दृष्टिः अर्पिता त्वयेति शेषः तदा मम इन्द्रतया किम्? नायिकां प्रति नायकस्योक्तिरियम्। अत्र त्वयेति पदाप्रयोगे अपरस्यापि कर्त्तृपदस्याध्याहारसम्भवेन रसप्रतीतिप्रतिरोध इति दोषत्वम्। कथितपदतामुदाहरतीति। अत्र लीलाशब्दप्रयोगे श्रोतुरर्थान्तरानुधावनात् रसभङ्ग इति बोध्यम्। हतवृत्ततां

सततमेतस्या हृदयं भिन्ते मनोभवः कुपितः"। "अयि! मयि मानिनि! मा कुरु मानम्"। इदं वृत्तं हास्यरसस्यैवानुकूलम्। "विकसितसहकारभारहारिपरिमल एष समागतो वसन्तः"। यत्पादान्ते लघोरपि गुरुभाव उक्तस्तत् सर्वत्र द्वितीयचतुर्थपादविषयम्। प्रथमतृतीयपादविषयन्तु वसन्ततिलकादेरेव। अत्र प्रमुदितसौरभ आगतो वसन्त इति पाठो युक्तः। यथा वा।

"अन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा
सम्भाराः खलु तेऽन्य एव विधिना यैरेष सृष्टो युवा।
श्रीमत्कान्तिजुषां द्विषां करतलात् स्त्रीणां नितम्बस्थलात्
दृष्टे यत्र पतन्ति मूढ़मनसामस्त्राणि वस्त्राणि च"॥

अत्र वस्त्राणि चेति बन्धस्य श्लथत्वश्रुतिः (ठ)।

"वस्त्राण्यपि" इति पाठे तु दार्ढ्यमिति न दोषः। "इदमप्राप्तगुरुभावान्तलघु" इति काव्यप्रकाशकारः। वस्तुतस्तु "लक्षणानुसरणेऽप्यश्रव्यम्" इत्यन्ये।

"प्रोज्ज्वलज्ज्वलनज्वालाविकटोरुसटाच्छटः।

---

त्रिविधामाह हतमिति। हतेति। अत्र प्रथमद्वितीयगणयोर्भकारसकारयोः सान्निध्यं वैरस्यापादकत्वेन सामाजिकानामनुभवसिद्धमिति दोषः। अन्या इति। ताः गुणरत्नानां रोहणभुवः उत्पत्तिक्षेत्राणि अन्या विलक्षणा इत्यर्थः। सा धन्या प्रशंसनीया पुण्यवती वा मृत् मृत्तिका अन्या विलक्षणेत्यर्थः ते सम्भाराः उपादानानि इत्यर्थः अन्याः खलु निश्चये। विधिना विधात्रा यैः सम्भारैः एष युवा सृष्ट उत्पादितः। यत्र यूनि दृष्टे सति मूढ़मनसाम् इतिकर्त्तव्यविमूढ़मतीनां श्रीमत्कान्तिजुषां द्विषां शत्रूणां करतलात् अस्त्राणि स्त्रीणां नितम्बस्थलात् वस्त्राणि च पतन्ति। परमसुन्दरो महावीरश्चायमिति भावः। शार्दूलविक्रीड़ितं वृत्तम्। अत्र श्लथत्वश्रुतिः शैथिल्यश्रवणम्।

(ड) पततप्रकर्षतामाह प्रोज्ज्वलेति। प्रज्वलन् यः ज्वलनः अग्निः तस्य ज्वालाः शिखाः तद्वत् विकटाः उग्राः उरवः महान्तः सटानां जटानां छटा

श्वासक्षिप्तकुलक्ष्माभृत् पातु वो नरकेशरी" ॥ (ड)

अत्र क्रमेण अनुप्रासप्रकर्षः पतितः।

"दलिते उत्पले एते अक्षिणी अमलाङ्गि! ते"।

एवंविधसन्धिविश्लेषस्य असकृत्प्रयोग एव दोषः। अनुशासनमुलङ्घ्य वृत्तभङ्गभयमात्रेण सन्धिविश्लेषस्य तु सकृदपि। यथा।

"वासवाशामुखे भाति इन्दुश्चन्दनबिन्दुवत्"।

"चलण्डामरचेष्टित इति।" अत्र सन्धौ जुगुप्साव्यञ्जकमश्लीलत्वम्।

"उर्व्यसावत्र तर्वाली मर्वन्ते चार्ववस्थितिः"। अत्र सन्धौ कष्टत्वम् (ढ)।

इन्दुर्विभाति कर्पूरगौरैर्धवलयन् करैः

जगन्मा कुरु तन्वङ्गि! मानं पादानते प्रिये" ॥ (ण)

अत्र जगदिति प्रथमार्द्धे पठितुमुचितम्।

"नाशयन्तो घनध्वान्तं तापयन्तो वियोगिनः।

पतन्ति शशिनः पादा भासयन्तः क्षमातलम्" ॥

---

समूहो यस्य तादृशः तथा श्वासेन निःश्वासमारुतेन क्षिप्ताः दूरमपसारिताः कुलक्ष्माभृतः कुलाचलाः येन तथाभूतः नरकेशरी नृसिंहः वः युष्मान् पातु रक्षतु। अत्र प्रकर्षपतनेन वैरस्यावगमात् देवविषयकरतेः प्रकर्षहानिरिति दोषः।

(ढ) सन्धिविश्लेषमुदाहरति दलिते इति। सन्ध्यश्लीलतामाह चलण्डेति। चलन् डामरचेष्टितः उद्धतव्यापारवानित्यर्थः। सन्धिकष्टतामाह उर्वीति। मर्वन्ते मरोः जलशून्यभूमेः अन्ते अवसाने असौ उर्वी महती चारुः सुन्दरी अवस्थितिर्यस्यास्तादृशी तर्वाली तरूणां श्रेणी।

(ण) अर्द्धान्तरैकपदतामुदाहरति इन्दुरिति। इन्दुश्चन्द्रः कर्पूरवत् गौरैः धवलैः करैः किरणैः जगत् धवलयन् श्वेतीकुर्वन् विभाति विराजते। हे तन्वङ्गि! कृशाङ्गि! पादानते चरणप्रणते प्रिये मानं मा कुरु।

